अचेतनं प्रधानं स्वरूपत्वेन प्रतिपद्येत । यदि पुनः प्रधानमेवात्मीयत्वात् स्वशब्देनैवोच्येतैवमपि चेतनोऽचेतनमप्येतीति विरुद्धमापद्येत, श्रुत्यन्तरं च "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किं च न वेद नान्तरम्" इति सुषुप्तावस्थायां चेतनेऽप्ययं दर्शयति, अतो यस्मिन्नप्ययः सर्वेषां चेतनानां तच्चेतनं सच्छब्दवाच्यं जगतः कारणं, न प्रधानम्॥ कुतश्च न प्रधानं जगतः कारणम्।

## गतिसामान्यात् ॥ १० ॥

यदि तार्किकसमय इव वेदान्तेष्वपि भिन्ना कारणावगतिरभविष्यत् क्वचिच्चेतनं ब्रह्म जगतः कारणम् क्वचिदचेतनं प्रधानं क्वचिदन्यदेवेति ततः कदाचित् प्रधानकारणवादानुरोधेनापीक्षत्यादिश्रवणमकल्पयिष्यत् , न त्वेतदस्ति, समानैव हि सर्वेषु वेदान्तेषु चेतनकारणा-

चेति॥ स्वशब्दस्यात्मनीवात्मीयेऽपि शक्तिरस्तीत्याशङ्क्याह॥यदीति॥ प्राज्ञेन बिम्बचैतन्येनेश्वरेण सम्परिष्वङ्गो भेदभ्रमाभावेनाभेदइत्यर्थः। तत्तद्वेदान्तजन्यानामवगतीनां चेतनकारणविषयकत्वेन सामान्यान्न चेतनं जगतः कारणमिति सूत्रार्थं व्यतिरेकमुखेनाह ॥ यदि तार्किकेत्यादिना॥ अन्यत् परमाण्वादिकम् ॥ न त्वेतदिति ॥ अवगतिवैष-

वगतिः, "यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते"। "प्राणेभ्यो देवा देवेभ्यो लोकाः" इति "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति "आत्मत एवेदं सर्वम्" इति "आत्मत एष प्राणो जायते" इति चात्मनः कारणत्वं दर्शयन्ति सर्वे वेदान्ताः। आत्मशब्दश्च चेतनवचन इत्यवोचाम। महच्च प्रामाण्यकारणमेतद्यद्वेदान्तवाक्यानां चेतनकारणत्वे समानगतित्वं चक्षुरादीनामिव रूपादिषु, अतो गतिसामान्यात् सर्वज्ञं ब्रह्म जगतः कारणम्॥कुतश्च सर्वज्ञं ब्रह्म जगतः कारणम्।

## श्रुतत्वाच्च॥ ११॥

स्वशब्देनैव च सर्वज्ञ ईश्वरो जगतः कारणमिति

म्यमित्यर्थः। विप्रतिष्ठेरन् विविधं नानादिशः प्रतिगच्छेयुः प्राणाश्चक्षुरादयो यथा गोलकं प्रादुर्भवन्ति प्राणेभ्योऽनन्तरं देवाः सूर्यादयस्तदनुग्राहकाः, तदनन्तरं लोक्यन्त इति लोका विषया इत्यर्थः। ननु वेदान्तानां स्वतः प्रामाण्यत्वेन प्रत्येकं स्वार्थनिश्चायकत्वसम्भवात् किं गतिसामान्येनेत्याह॥ **महच्चेति**॥ एकरूपावगतिहेतुत्वं वेदान्तानां प्रामाण्यसंशयनिवृत्तिहेतुरित्यत्र दृष्टान्तमाह॥ **चक्षुरिति**॥ यथा सर्वेषां चक्षुषां एकरूपावगतिहेतुत्वं श्रवणानां शब्दावगतिहेतुत्वं घ्राणादीनां गन्धादिषु, एवं ब्रह्मणि वेदान्तानां गतिसामान्यं प्रामाण्य-

श्रूयते श्वेताश्वतराणां मन्त्रोपनिषदि सर्वज्ञमीश्वरं प्रकृत्य "न तस्य कश्चित्पतिरस्ति लोके, न-चेशिता नैव च तस्य लिङ्गम्, स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति, तस्मात् सर्वज्ञं ब्रह्म जगतः कारणं, नाचेतनं प्रधानमन्यद्वेति सिद्धम् ॥ ११ ॥ "जन्माद्यस्य यत" इत्यारभ्य "श्रुतत्वाच्च" त्येवमन्तैः सूत्रैर्यान्युदाहृतानि वेदान्तवाक्यानि, तेषां सर्वज्ञः सर्वशक्तिरीश्वरो जगतो जन्मस्थितिलयकारणमित्येतस्यार्थस्य प्रतिपादकत्वम् न्यायपूर्वकं प्रतिपादितम्। गतिसामान्योपन्यासेन च सर्वे वेदान्ताश्चेतनकारणवादिन इति व्याख्यातं।

दार्ढ्यहेतुरित्यर्थः एवमीक्षत्यादिलिङ्गैरचेतने वेदान्तानां समन्वयं निरस्य चेतनवाचकशब्देनापि निरस्यति ॥ श्रुतत्वाच्चेति ॥ सूत्रं व्याचष्टे ॥ **स्वशब्देनेति** ॥ स्वस्य चेतनस्य वाचकः"सर्वविच्छब्दज्ञः कालकालो गुणी सर्वविद्यः" इति सर्वज्ञं परमेश्वरं प्रकृत्य "स सर्ववित् कारणं" इति श्रुतत्वान्नाचेतनं कारणमिति सूत्रार्थः । करणाधिपा जीवास्तेषामधिपः, अधिकरणार्थमुपसंहरति ॥ **तस्मादिति** ॥ ईक्षणात्मशब्दादिकं परमाण्वादावप्ययुक्तमिति मत्वाह ॥ **अन्यद्वेति** ॥ ॥ ११ ॥ वृत्तानुवादेनोत्तरसूत्रसन्दर्भमाक्षिपति ॥ **जन्मादीति** ॥ प्रथमसूत्रस्य शास्त्रोपोद्घातत्वात् जन्मादिसूत्रमारभ्येत्युक्तं सर्ववेदान्तानां कार्ये प्रधानाद्यचेतने च समन्वयनिरासेन ब्रह्मपरत्वं व्याख्यातम्, अतः प्रथमाध्यायार्थस्य समाप्तत्वादुत्तरग्रन्थारम्भे किं कारणमित्यर्थः,

अतः परस्य ग्रन्थस्य किमुत्थानमिति, उच्यते, द्विरूपं हि ब्रह्मावगम्यते नामरूपविकारभेदोपाधिविशिष्टं, तद्विपरीतं च सर्वोपाधिविवर्जितम्। "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येत्, यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, अथ यत्रान्यत्पश्यत्यन्यच्छृणो-

वेदान्तेषु सगुणनिर्गुणब्रह्मवाक्यानां बहुलमुपलब्धेः। तत्र कस्य वाक्यस्य सगुणोपासनाविधिद्वारा निर्गुणे समन्वयः कस्य वा गुणविवक्षां विना साक्षादेव ब्रह्मणि समन्वय इत्याकाङ्क्षेव कारणमित्याह ॥ **उच्यत इति** ॥ संक्षिप्य सगुणनिर्गुणवाक्यार्थमाह ॥ **द्विरूपं हीति** ॥ नामरूपात्मको विकारः सर्वं जगत् तद्भेदो हिरण्यश्मश्रुत्वादिविशेष इति वाक्यार्थः। वाक्यान्युदाहरति ॥ **यत्र हीत्यादिना** ॥ यस्यां खल्वज्ञानावस्थायां द्वैतमिव कल्पितं भवति तत्तदेतरः सन्नितरं पश्यतीति दृश्योपाधिकं वस्तु भाति। यत्र ज्ञानकाले विदुषः सर्वं जगदात्ममात्रमभूत्तदा तु केन कं पश्येदित्याक्षेपान्निरुपाधिकं तत्त्वं भाति, यत्र भूम्नि निश्चितो विद्वान् द्वितीयं किमपि न वेत्ति सोऽद्वितीयो भूमा परमात्मा निर्गुणः। अथ निर्गुणोक्त्यनन्तरं सगुणमुच्यते, यत्र सगुणे स्थितो द्वितीयं वेत्ति तदल्पं परिच्छिन्नं, यस्तु भूमा तदमृतं नित्यम् ॥ **अथेति** ॥ पूर्ववत् व्याख्येयम्[१]। धीरः परमात्मैव सर्वाणि रूपाणि विचित्य सृष्ट्वा नामानि च कृत्वा बुद्ध्यादौ प्रविश्य जीवसंज्ञो व्यवहरन् यो वर्त्तते, स सगुणस्तं निर्गुणत्वेन विद्वानप्यमृतो भवति, निर्गताः कला अंशा यस्मात्तन्निष्कलं, अतो निरंशत्वान्निष्क्रियं, अतः शान्तम-

---

१ भूमामृतोक्त्यनन्तरमित्यर्थोऽथशब्दस्य व्याख्येय इति भावः।

त्यन्यद्विजानाति, तदल्पं, यो वै भूमा, तदमृतं, अथ यदल्पं, तन्मर्त्यं, सर्वाणि रूपाणि विचित्य धीरः, नामानि कृत्वाभिवदन् यदास्ते, निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं, अमृतस्य परं सेतुं दग्धेन्धनमिवानलं, नेति नेत्यात्मा अस्थूलमनण्वह्रस्वमदीर्घम्" इति "न्यूनमन्यत् स्थानं, सम्पूर्णमन्यत्" इति च, एवं सहस्रशो विद्याविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वाक्यानि। तत्राविद्यावस्थायां ब्रह्मण उ-

परिणामि निरवद्यं रागादिदोषशून्यं, अञ्जनं मूलतमःसम्बन्धो धर्मादिकं वा तच्छून्यं निरञ्जनं, किञ्चामृतस्य मोक्षस्य स्वयमेव वाक्योत्थवृत्तिस्थत्वेन परमुत्कृष्टं सेतुं लौकिकसेतुवत् प्रापकं यथा दग्धेन्धनोऽनलः शाम्यति तमिवाविद्या तज्जं दग्ध्वा प्रशान्तं निर्गुणमात्मानं विद्यादित्यर्थः॥ नेति नेतीति॥ व्याख्यातं। स्थूलादिद्वैतशून्यम्। रूपद्वये श्रुतिमाह॥ न्यूनमिति॥ द्वैतस्थानं न्यूनं अल्पं सगुणरूपं निर्गुणादन्यत् तथा सम्पूर्णं निर्गुणं सगुणादन्यदित्यर्थः, एकस्य द्विरूपत्वं विरुद्धमित्यत आह॥ विद्येति॥ विद्याविषयो ज्ञेयं निर्गुणं सत्यं, अविद्याविषय उपास्यं सगुणकल्पितमित्यविरोधः। तत्राविद्याविषयं विवृणोति॥ तत्रेति॥ निर्गुणज्ञानार्थमारोपितप्रपञ्चमाश्रित्य बोधात् प्राक्काले गुडजिह्विकान्यायेन तत्फलार्थान्युपासनानि विधीयन्ते तेषां चित्तैकाग्र्यद्वारा ज्ञानं मुख्यं फलमिति तद्वाक्यानामपि महातात्पर्यं ब्रह्मणीति मन्तव्यं, नामब्रह्मेत्याद्युपासीनां कामचारादिरभ्युदयः फलं, दहराद्युपासीनां क्रममुक्तिः उद्गीथादिध्यानस्य कर्मसमृद्धिःफलमिति

१ कारणाविद्यासम्बन्ध इत्यर्थः।

पास्योपासकादिलक्षणः सर्वो व्यवहारः। तत्र कानिचित् ब्रह्मण उपासनान्यभ्युदयार्थानि, कानिचित् क्रममुक्त्यर्थानि, कानिचित् कर्मसमृद्ध्यर्थानि, तेषां गुणविशेषोपाधिभेदेन भेदः। एक एव तु परमात्मेश्वरस्तैस्तैर्गुणविशेषैर्विशिष्ट उपास्यो यद्यपि भवति, तथापि यथागुणोपासनमेव फलानि भिद्यन्ते "तं यथा यथोपासते तदेव भवति" इति श्रुतेः "यथा क्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति" इति च। स्मृतेश्च।

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः" इति॥

यद्यप्येक एव आत्मा सर्वभूतेषु स्थावरजङ्गमेषु गूढस्तथापि चित्तोपाधिविशेषतारतम्यात् आत्मनः कूटस्थनित्यैकरूपस्याप्युत्तरोत्तरमाविष्कृततारतम्यमैश्वर्यशक्तिविशेषैः श्रूयते "त-

भेदः, ध्यानानां मानसत्वात्, ज्ञानान्तरङ्गत्वाच्च, ज्ञानकाण्डे विधानमिति भावः। ननूपास्यब्रह्मण एकत्वात् कथमुपासनानां भेदस्तत्राह तेषामिति॥ गुणविशेषाः सत्यकामत्वादयो हृदयादिरुपाधिः। अत्र स्वयमेवाशङ्क्य परिहरति॥ एक इति॥ परमात्मस्वरूपाभेदेऽप्युपाधिभेदेनोपहितोपास्यरूपभेदादुपासनानां भेदे सति फलभेद इति भावः। तं परमात्मानं यद्यद्गुणत्वेन लोका राजानमिवोपासते तत्तद्गु-

**स्य य आत्मानमाविस्तरां वेद" इत्यत्र। स्मृतावपि।**

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।**

**तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्। इति**

**यत्र यत्र विभूत्याद्यतिशयः स स ईश्वर इत्यु-पास्यतया चोद्यते, एवमिहापि आदित्यमण्डले हिरण्मयः पुरुषः सर्वपाप्मोदयलिङ्गात् पर एवे-ति, वक्ष्यति, एव "माकाशस्तल्लिङ्गादि" त्यादि-षु द्रष्टव्यं, एवं सद्योमुक्तिकारणमप्यात्मज्ञानमु-**

णवत्त्वमेव तेषां फलं भवति, क्रतुः सङ्कल्पो ध्यानम् इह यादृशध्या-नवान् भवति मृत्वा तादृशोपास्यरूपो भवतीत्यत्रैव भगवद्वाक्यमाह ॥ **स्मृतेश्चेति** ॥ ननु सर्वभूतेषु निरतिशयात्मन एकत्वादुपास्योपा-सकयोस्तारतम्यश्रुतयः कथमित्याशङ्कां परिहरति ॥ **यद्यप्येक इति**॥ उक्तानामुपाधीनां शुद्धितारतम्यादैश्वर्यज्ञानसुखरूपशक्तीनां तारतम्य-रूपा विशेषा भवन्ति तैरेकरूपस्यात्मन उत्तरोत्तरं मनुष्यादिहिरण्यग-र्भान्तेष्वाविर्भावतारतम्यं श्रूयते। तस्यात्मन आत्मानं स्वरूपमाविस्तरां प्रकटतरं यो वेद उपास्ते सोऽश्नुते तदिति तरप्प्रत्ययादित्यर्थः। तथा च निकृष्टोपाधिरात्मैवोपासकः उत्कृष्टोपाधिरीश्वर उपास्य इत्यौपाधिकं तारतम्यमविरुद्धमिति भावः। अत्रार्थे भगवद्गीतामुदाहरति ॥ **स्मृता-विति** ॥ अत्र सूर्यादेरपि न जीवत्वेनोपास्यता किं त्वीश्वरत्वेनेत्युक्तं भवति। तत्र सूत्रकारसम्मतिमाह ॥ **एवमिति** ॥ उदयः असम्बन्धः एवं यस्मिन् वाक्ये उपाधिर्विवक्षितः तद्वाक्यमुपासनापरमिति वक्तु-मुत्तरसूत्रसन्दर्भस्यारम्भ इत्युक्त्वा यत्र न विवक्षितः तद्वाक्यं ज्ञेयब्रह्म-परमिति निर्णयार्थमारम्भ इत्याह ॥ **एवं सद्य इति** ॥ अन्नमयादि-कोशा उपाधिविशेषाः, वाक्यगतिस्तात्पर्यम्। आरम्भसमर्थनमुपसं-

पाधिविशेषद्वारेणोपदिश्यमानमप्यविवक्षितो-
पाधिसम्बन्धविशेषं परापरविषयं परापरविष-
यत्वेन सन्दिह्यमानं वाक्यगतिपर्यालोचनया
निर्णेतव्यं भवति। यथैव हि ताव "दानन्दमयो-
ऽभ्यासा" दिति, एवमेकमपि ब्रह्मापेक्षितोपा-
धिसम्बन्धं निरस्तोपाधिसम्बन्धं चोपास्यत्वेन
ज्ञेयत्वेन च वेदान्तेषु उपदिश्यत इति प्रदर्शयितुं
परो ग्रन्थ आरभ्यते। यच्च "गतिसामान्यादि"-
त्यचेतनकारणनिराकरणमुक्तं तदपि वाक्यान्त-
राणि ब्रह्मविषयाणि व्याचक्षाणेन ब्रह्मविपरीत-
कारणनिषेधेन प्रपञ्च्यते॥

## आनन्दमयोऽभ्यासात्॥१२॥

तैत्तिरीयके "अन्नमयं" "प्राणमयं" "मनो-

हरति ॥ **एवमेकमपीति** ॥ सिद्धवदुक्तगतिसामान्यस्य साधनार्थ-
मप्युत्तरारम्भ इत्याह ॥ **यच्चेति** ॥ अन्नं प्रसिद्धं प्राणमनोबुद्धयः
हिरण्यगर्भरूपाः, बिम्बचैतन्यमीश्वर आनन्दः "तेषां पञ्चानां विकारा
आध्यात्मिका देहप्राणमनोबुद्धिजीवा अन्नमयादयः पञ्चकोशाः" इ-
ति श्रुतेः परमार्थः। पूर्वाधिकरणे गौणमुख्येक्षणयोरतुल्यत्वेन संशया-
भावाद्गौणप्रायपाठो न निश्चायक इत्युक्तं तर्हि मयटो विकारे प्राचुर्ये
च मुख्यत्वात् संशये विकारप्रायपाठादानन्दविकारो जीव आनन्दम-
य इति निश्चयोऽस्तीति प्रत्युदाहरणसङ्गत्या पूर्वपक्षमाह॥**कस्मादि-
ति** ॥ आकाङ्क्षापूर्वकं, **अन्नमयादीति** श्रुत्यादिसङ्गतयः स्फुटा एव,

मयं” “विज्ञानमयं च” अनुक्रम्याम्नायते “तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः” इति। तत्र संशयः। किमिह आनन्दमयशब्देन परमेव ब्रह्मोच्यते “यत् प्रकृतं सत्यं ज्ञानमनन्तं ब्रह्म” इति, किंवा अन्नमयादिवत् ब्रह्मणोऽर्थान्तरमिति, किं तावत् प्राप्तं ब्रह्मणोऽर्थान्तरममुख्य आत्मा आनन्दमयः स्यात्। कस्मात्, अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वात्। अथापि स्यात् सर्वान्तरत्वादानन्दमयो मुख्य एवात्मेति।न स्यात् प्रियाद्यवयवयोगात्, शारीरत्वश्रवणाच्च। मुख्यश्चेदात्मा आनन्दमयः स्यान्न प्रियादिसंस्पर्शः स्यात् तस्य,इह तु “प्रियमेव शिरः” इत्यादि श्रूयते, शारीरत्वं च श्रूयते “तस्यैष एव शारीर आत्मा यः पूर्वस्य” इति तस्य पूर्वस्य विज्ञानमयस्यैष एव शारीर आत्मा य एष आनन्दमय इत्यर्थः। न च स शरीरस्य सतः प्रियाप्रियसंस्पर्शौ वारयितुं शक्यः, तस्मात् सं-

पूर्वपक्षे वृत्तिकारमते जीवोपास्त्या प्रियादिप्राप्तिः फलं, सिद्धान्ते तु ब्रह्मोपास्त्येति भेदः, शङ्कते ॥ अथापीति॥ परिहरति ॥ न स्यादिति ॥ संगृहीतं विवृणोति ॥ मुख्य इति ॥ परमात्मेत्यर्थः, शारीरत्वेऽपीश्वरत्वं किं न स्यादित्यत आह ॥ न चेति ॥ जीवत्वं दुर्वारमित्यर्थः । नन्वानन्दपदाभ्यासेऽप्यानन्दमयस्य ब्रह्मत्वं कथमित्याश-

सार्येवानन्दमय आत्मा इत्येवं प्राप्ते इदमुच्यते, आनन्दमयोऽभ्यासात्, पर एवात्मानन्दमयो भवितुमर्हति। कुतोऽभ्यासात्। परस्मिन्नेव ह्यात्मन्यानन्दशब्दो बहुकृत्वाऽभ्यस्यते, आनन्दमयं प्रस्तुत्य "रसो वै सः" इति तस्यैव रसत्वमुक्त्वोच्यते। "रसं ह्येवायं लब्ध्वानन्दी भवति को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति, सैषानन्दस्य मीमांसा भवति" "एतमानन्दमयमात्मानमुपसंक्रामति"। "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति "आनन्दो ब्रह्मेति व्यजानात्" इति च। श्रुत्यन्तरे च "विज्ञानमानन्दं ब्रह्म" इति ब्र-

ङ्कच ज्योतिष्टोमाधिकारे ज्योतिःपदस्य ज्योतिष्टोमपरत्ववदानन्दमयप्रकरणस्थानन्दपदस्यानन्दमयपरत्वात् तदभ्यासस्तस्य ब्रह्मत्वसाधक इत्यभिप्रेत्याह ॥ **आनन्दमयं प्रस्तुत्येति**॥ रसः सार आनन्द इत्यर्थः अयं लोकः यत् यदि एष आकाशः पूर्णः आनन्दः साक्षी प्रेरको न स्यात् तदा को ह्यन्याच्चलेत् को वा विशिष्य प्राण्याज्जीवेत् तस्मादेष एवानन्दयाति, आनन्दयतीत्यर्थः। "युवा स्यात् साधुयुवा" इत्यादिना वक्ष्यमाणमनुष्ययुवानन्दमारभ्य ब्रह्मानन्दावसाना एषा सन्निहिता आनन्दस्य तारतम्यमीमांसा भवति, उपसंक्रामति "विद्वान् प्राप्नोति" इत्येकदेशिनामर्थः। मुख्यसिद्धान्ते तूपसंक्रमणं विदुषः कोशानां प्रत्यङ्मात्रत्वेन विलापनमिति ज्ञेयं शिष्टमुक्तार्थम् आनन्दशब्दाद्ब्रह्मावगतिः सर्वत्र समानेति गतिसामान्यार्थमाह॥ **श्रुत्यन्तरे चेति**॥ लि-

ह्मण्येव आनन्दशब्दो दृष्टः, एवमानन्दशब्दस्य बहुकृत्वो ब्रह्मण्यभ्यासात् आनन्दमय आत्मा ब्रह्मेति गम्यते। यत्तूक्तं अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वादानन्दमयस्याप्यमुख्यात्मत्वमिति, नासौ दोषः, आनन्दमयस्य सर्वान्तरत्वात्। मुख्यमेव ह्यात्मानं उपदिदिक्षु शास्त्रं लोकबुद्धिमनुसरद् अन्नमयं शरीरमनात्मानमत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्य मूषानिषिक्तद्रुतताम्रादिप्रतिमावत् ततोऽन्तरं ततोऽन्तरमित्येवं पूर्वेण पूर्वेण समानमुत्तरमुत्तरमनात्मानमात्मा इति ग्राहयत् प्रतिपत्तिसौकर्यापेक्षया सर्वान्तरं मुख्यमानन्दमयमात्मानमुपदिदेशेति श्लिष्टतरम्। यथारुन्धतीनिदर्शने बह्वीष्वपि तारास्वमुख्यास्वरुन्धतीषु दर्शितासु या अन्ते प्रदर्श्यते सा मुख्यैवारुन्धती भवति, एवमिहाप्यानन्दमयस्य सर्वान्तरत्वान्मुख्यमात्मत्वम्। यत्तु ब्रूषे

ङ्गादमुख्यात्मसन्निधेर्बाध इति मत्वाह॥ नासाविति॥ सर्वान्तरत्वं न श्रुतमित्याशङ्क्य ततोऽन्यस्यानुक्तेस्तस्य सर्वान्तरत्वमिति विवृणोति॥ मुख्यमिति॥ लोकबुद्धिमिति॥तस्याः स्थूलग्राहितामनुसरादित्यर्थः ताम्रस्य मूषाकारत्ववत् प्राणस्य देहाकारत्वं देहेन सामान्यं तथा मनः प्राणाकारं तेन सममित्याह॥ पूर्वेणेति॥ अतीतो योऽनन्तर उपा-

अतिसम्बद्धमित्यर्थः।

प्रियादीनां शिरस्त्वादिकल्पना अनुपपन्ना मुख्यस्यात्मनः इत्यतीतानन्तरोपाधिजनिता सा न स्वाभाविकीत्यदोषः। शारीरत्वमप्यानन्दमयस्यान्नमयादिशरीरपरम्परया प्रदृश्यमानत्वात्, न पुनः साक्षादेव शारीरत्वं संसारिवत्, तस्मादानन्दमयः पर एवात्मा ॥ १२ ॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

अत्राह नानन्दमयः पर आत्मा भवितुमर्हति। कस्मात्। विकारशब्दात्, प्रकृतवचनादयमन्यः शब्दो विकारवचनः समधिगत आनन्दमय इति मयटो विकारार्थत्वात्, तस्मादन्नमयादिशब्दवत् विकारविषय एवायमानन्दमयशब्द इति चेत्, न, प्राचुर्यार्थेऽपि मयटः स्मरणात्तत्प्रकृतवचने मयडिति हि प्रचुरतायामपि मयट् स्मर्यते, यथान्नमयो यज्ञ इति अन्नप्रचुर उच्यते, एवमानन्दप्रचुरं ब्रह्मानन्दमयं उच्यते। आनन्द प्र-

धिर्विज्ञानकोशस्तत्कृता सावयवत्वकल्पना शरीरेण ज्ञेयत्वाच्छारीरत्वमिति लिङ्गद्वयं दुर्बलं, अतः सहायाभावादभ्यासस्सर्वान्तरत्वाभ्यां विकारसन्निधेर्बाध इति भावः ॥ १२ ॥ विकारार्थकमयट् श्रुतिसहाय इत्याशङ्क्य मयटः प्राचुर्येऽपि विधानान्मैवमित्याह ॥ विकारेत्यादिना ॥ तत्प्रकृतवचने मयडिति तदिति प्रथमासमर्थाच्छब्दात् प्राचुर्य-

चुरत्वं च ब्रह्मणो मनुष्यत्वादारभ्योत्तरस्मिन् उत्तरस्मिन् स्थाने शतगुण आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतिशयत्वावधारणात्, तस्मात् प्राचुर्यार्थे मयट् ॥ १३ ॥

## तद्धेतुव्यपदेशाच्च ॥ १४ ॥

इतश्च प्राचुर्यार्थे मयट्, यस्मादानन्दहेतुत्वं ब्रह्मणो व्यपदिशति श्रुतिः "एष ह्येवानन्दयाति" इति आनन्दयतीत्यर्थः; यो ह्यन्यानानन्दयति स प्रचुरानन्द इति प्रसिद्धं भवति । यथा लोके योऽन्येषां धनिकत्वमापादयति स प्रचुरधन इति गम्यते तद्वत्, तस्मात्, प्राचुर्यार्थेऽपि मयटः सम्भवादानन्दमयः पर एव आत्मा ॥ १४ ॥

## मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

इतश्चानन्दमयः पर एवात्मा, यस्मात् "ब्र-

विशिष्टस्य प्रस्तुतस्य वचनेऽभिधाने गम्यमाने मयट्प्रत्ययो भवतीति सूत्रार्थः । अत्र वचनग्रहणात् प्रकृतस्य प्राचुर्यवैशिष्ट्यसिद्धिः, तादृशस्य लोके मयटोऽभिधानाद्यथा अन्नमयो यज्ञ इति, अत्र ह्यन्नं प्रचुरमस्मिन्नित्यन्नशब्दः प्रथमाविभक्तियुक्तस्तस्मान्मयट्प्रत्ययः यज्ञस्य प्रकृत्यर्थान्नप्राचुर्यवाची दृश्यते न शुद्धप्रकृतवचन इति ध्येयम् ॥ १३ ॥ सूत्रस्थचशब्दोऽनुक्तसमुच्चयार्थ इति मत्वा व्याचष्टे ॥ इतश्चेति ॥ तच्चानुक्तं ब्रह्मानन्दस्य निरतिशयत्वावधारणं पूर्वमुक्तम् ॥ १४ ॥ आनन्दमयस्य ब्रह्मत्वे लिङ्गमुक्त्वा प्रकरणमाह ॥ मान्त्रेति ॥ यस्मादेवं

ह्मविदाप्नोति परम्" इत्युपक्रम्य "सत्यं ज्ञानमनन्तं ब्रह्म" इति अस्मिन्मन्त्रे यत् ब्रह्म प्रकृतं सत्यज्ञानानन्तविशेषणैर्निर्धारितं, यस्मादाकाशादिक्रमेण स्थावरजङ्गमानि भूतान्यजायन्त, यच्च भूतानि सृष्ट्वा तान्यनुप्रविश्य गुहायामवस्थितं सर्वान्तरं, यस्य विज्ञानायान्योऽन्तर आत्मा, अन्योऽन्तर आत्मेति प्रक्रान्तं, तन्मान्त्रवर्णिकमेव ब्रह्मेह गीयते ऽन्योन्तर आत्मानन्दमय इति। मन्त्रब्राह्मणयोश्चैकार्थत्वं युक्तम् अविरोधात्; अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्यातां, न चान्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्माऽभिधीयते। "एतन्निष्ठैव च" सैषा भार्गवी वारुणी विद्या"। तस्मादानन्दमयः पर एवात्मा ॥ १५ ॥

कृतं तस्मान्मान्त्रवर्णिकमेव ब्रह्मानन्दमय इति वाक्ये गीयत इति योजना। ननु मन्त्रोक्तमेवात्र ग्राह्यमिति को निर्बन्धस्तत्राह ॥ मन्त्रेति ॥ ब्राह्मणस्य मन्त्रव्याख्यानत्वादुपायत्वमस्ति मन्त्रस्तूपेयः तदिदमुक्तं ॥ अविरोधादिति ॥ तयोरुपायोपेयभावादित्यर्थः। तर्ह्यन्नमयादीनामपि मान्त्रवर्णिकब्रह्मत्वं स्यादित्यत आह॥ न चेति ॥ किं च भृगवे प्रोक्ता वरुणेनोपदिष्टा भृगुवल्ली पञ्चमपर्यायस्थानन्दे प्रतिष्ठिता ततः स्थानन्यायेन तदेकार्थब्रह्मवल्ल्या आनन्दमये निष्ठेत्याह ॥ एतन्निष्ठैवेति ॥ स ईश्वरः तपः सृष्ट्वा लोचनमतप्यत कृतवानित्यर्थः, अभिध्या-

## नेतरोऽनुपपत्तेः ॥ १६ ॥

इतश्चानन्दमयः पर एवात्मा नेतरः। इतर ईश्वरादन्यः संसारी जीव इत्यर्थः। न जीव आनन्दमयशब्देनाभिधीयते। कस्मात्, अनुपपत्तेः। आनन्दमयं हि प्रकृत्य श्रूयते "सोऽकामयत बहु स्यां प्रजायेय" इति "स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च" इति। तत्र प्राक् शरीराद्युत्पत्तेरभिध्यानं सृज्यमानानां च विकाराणां स्रष्टुरव्यतिरेकः सर्वविकारसृष्टिश्च न परस्मादात्मनोऽन्यत्रोपपद्यते ॥ १६ ॥

## भेदव्यपदेशाच्च ॥ १७ ॥

इतश्च नानन्दमयः संसारी यस्मादानन्दमयाधिकारे "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति" इति जीवानन्दमयौ भेदेन व्यपदिशति। न हि लब्धैव लब्धव्यो भवति। कथं तर्ह्यात्माऽन्वेष्टव्यः "आत्मलाभान्न परं विद्यते" इति च श्रुतिस्मृती यावता न लब्धैव भवतीत्यु-

नं कामना, बहु स्यामित्यव्यतिरेकः॥१५॥१६॥ अधिकारे प्रकरणे स आनन्दमयो रसः। ननु लब्धृलब्धव्याभावेऽप्यभेदः किं न स्यादत आह ॥ न हि लब्धैवेति ॥ ननु लब्धृलब्धयोर्भेदस्यावश्यकत्वे श्रुतिस्मृत्योर्बाधः स्यादित्याशङ्कते ॥ कथमिति ॥ यावता यतस्त्वयेत्यु-

क्तम् । बाढं । तथाप्यात्मनोऽप्रच्युतात्मभाव-
स्यैव सतस्तत्त्वानवबोधनिमित्तो मिथ्यैव देहा-
दिष्वनात्मस्वात्मत्वनिश्चयो लौकिको दृष्टः, ते-
न देहादिभूतस्यात्मनोऽप्यात्माऽनन्विष्टोऽन्वेष्ट-
व्योऽलब्धो लब्धव्योऽश्रुतः श्रोतव्योऽमतो म-
न्तव्योऽविज्ञातो विज्ञातव्य इत्यादिभेदव्यपदे-
श उपपद्यते। प्रतिषिध्यत एव तु परमार्थतः स-
र्वज्ञात् परमेश्वरादन्यो द्रष्टा श्रोता वा "नान्यो-
ऽतोऽस्ति द्रष्टा" इत्यादिना परमेश्वरस्त्वविद्या-
कल्पिताच्छारीरात् कर्तुर्भोक्तुर्विज्ञानात्माख्या-
दन्यः, यथा मायाविनश्चर्मखड्गधरात् सूत्रेणा-

क्तम् अतः श्रुतिस्मृती कथमित्यन्वयः। उक्तां शङ्कामङ्गीकरोति॥**बाढ-मिति**॥ तर्ह्यात्मन एवात्मना लभ्यत्वोक्तिबाधः अभेदादित्याशङ्क्य कल्पितभेदान्न बाध इत्याह॥ **तथापीति**॥ अभेदेपीत्यर्थः लौकिकः भ्रमः आत्मनः स्वाज्ञानजभ्रमेण देहाद्यभिन्नस्य भेदभ्रान्त्या परमात्मनो ज्ञेयत्वाद्युक्तिरित्यर्थः । अन्वेष्टव्यो देहादिव्यतिरिक्ततया ज्ञेयः विवेकज्ञानेन लब्धव्यः साक्षात्कर्तव्यः तदर्थं श्रोतव्यः विज्ञानं निदिध्यासनं साक्षात्कारो वा श्रुत्यन्तरस्थार्थानुवादादपौनरुक्त्यम्। ननु भेदः सत्य एवास्तु तत्राह॥ **प्रतिषिध्यत** इति॥ अत ईश्वरात् द्रष्टा जीवोऽन्यो नास्तीति चेत् जीवाभेदादीश्वरस्यापि मिथ्यात्वं स्यादत आह॥ **परमेश्वर इति**॥ अविद्याप्रतिबिम्बत्वेन कल्पिताज्जीवाच्चिन्मात्र ईश्वरः पृथगस्तीति न मिथ्यात्वम्। कल्पितस्याधिष्ठानाभेदेऽप्यधिष्ठानस्य ततो भेद इत्यत्र दृष्टान्तमाह॥ **यथेति**॥ सूत्रारूढः स्वतोऽपि

काशमधिरोहतः स एव मायावी परमार्थरूपो भूमिष्ठोऽन्यः।यथा वा घटाकाशादुपाधिपरिच्छिन्नादनुपाधिरपरिच्छिन्न आकाशोऽन्यः। ईदृशं च विज्ञानात्मपरमात्मभेदमाश्रित्य "नेतरोऽनुपपत्ते" "भेदव्यपदेशाच्चे" त्युक्तम् ॥ १७॥

## कामाच्च नानुमानापेक्षा ॥ १८ ॥

आनन्दमयाधिकारे च "सोऽकामयत बहु स्यां प्रजायेय" इति कामयितृत्वनिर्देशान्नानुमानिकमपि सांख्यपरिकल्पितमचेतनं प्रधानमानन्दमयत्वेन कारणत्वेन वापेक्षितव्यम्। "ईक्षतेर्नाशब्द" मिति निराकृतमपि प्रधानं पूर्वसूत्रोदाहृतां कामयितृत्वश्रुतिं आश्रित्य प्रसङ्गात् पुनर्निराक्रियते गतिसामान्यप्रपंचनाय ॥ १८॥

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

इतश्च न प्रधाने जीवे वाऽऽनन्दमयशब्दः,

मिथ्या, न जीव इत्यरुच्या भेदमात्रमिथ्यात्वे दृष्टान्तान्तरमाह ॥ यथा वेति ॥ ननु सूत्रबलाद्भेदः सत्य इत्यत आह ॥ ईदृशं चेति ॥ कल्पितमेवेत्यर्थः। सूत्रे भेदः सत्य इति पदाभावात्तदनन्यत्वादिसूत्रणाच्छ्रुत्यनुसाराच्चेति भावः ॥ १७ ॥ नन्वानन्दात्मकसत्त्वप्रचुरं प्रधानमानन्दमयमस्तु। तत्राह ॥ कामाच्चेति ॥ अनुमानगम्यमानुमानिकम्। पुनरुक्तिमाशङ्क्याह ॥ ईक्षतेरिति ॥ १८ ॥ अस्मिन्निति वि-

यस्मादस्मिन्नानन्दमये प्रकृते आत्मनि प्रतिबुद्धस्यास्य जीवस्य तद्योगं शास्ति तदात्मना योगस्तद्योगस्तद्भावापत्तिः, मुक्तिरित्यर्थः। तद्योगं शास्ति शास्त्रम्। "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति; यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति" इति। एतदुक्तं भवति यदैतस्मिन्नानन्दमयेऽल्पमप्यन्तरम् अतादात्म्यरूपं पश्यति तदा संसारभयान्न निवर्तते। यदा त्वेतस्मिन्नानन्दमये निरन्तरं तादात्म्येन प्रतितिष्ठति तदा संसारभयान्निवर्तते इति; तच्च परमात्मपरिग्रहे घटते न प्रधानपरिग्रहे जीवपरिग्रहे वा, तस्मादानन्दमयः परमात्मेति सिद्धम्। इदं त्विह वक्तव्यं "स वा

षयसप्तमी, आनन्दमयविषयप्रबोधवतो जीवस्य तद्योगं यस्माच्छास्ति तस्मान्न प्रधानमिति योजना। जीवस्य प्रधानयोगोऽप्यस्तीत्यत आह ॥ तदात्मेति ॥ जीवस्य ब्रह्माभेदो नास्तीत्यत आह ॥ मुक्तिरिति ॥ अदृश्ये स्थूलप्रपञ्चशून्ये आत्मसम्बद्धमात्म्यं लिङ्गशरीरं तद्रहिते। निरुक्तं शब्दशक्यं तद्भिन्ने। निःशेषलयस्थानं निलयनं माया तच्छून्ये। ब्रह्मण्यभयं यथा स्यात्तथा यदैव प्रतिष्ठां मनसः प्रकृष्टां वृत्तिमेष विद्वाँल्लभते अथ तदैवाभयं ब्रह्म प्राप्नोतीत्यर्थः। उत् अपि अरमल्पमल्पमप्यन्तरं भेदं यदैवैष नरः पश्यति अथ तदा तस्य भयमिति योजना

१ अभेदसामानाधिकरण्यं हि भेदे अल्पत्वं बोध्यम्।

एष पुरुषोऽन्नरसमयः” “तस्माद्वा एतस्मादन्नरसमयात्, अन्योऽन्तरात्मा प्राणमयः”, “तस्मादन्योऽन्तरात्मा मनोमयः”, “तस्मादन्योऽन्तरात्मा विज्ञानमयः” इति च विकारार्थे मयट् प्रवाहे सत्यानन्दमय एवाकस्मादर्धजरतीयन्यायेन कथमिव मयटः प्राचुर्यार्थत्वं ब्रह्मविषयत्वं वा आश्रीयते इति। मान्त्रवर्णिकब्रह्माधिकारादिति चेत्, न, अन्नमयादीनामपि तर्हि ब्रह्मत्वप्रसङ्गः। अत्राह युक्तमन्नमयादीनामब्रह्मत्वं तस्मात्तस्मादान्तरस्यान्तरस्यान्यस्यान्यस्यात्मन उच्यमानत्वात्, आनन्दमयात्तु न कश्चिदन्योऽन्तर आत्मोच्यते। तेनानन्दमयस्य ब्रह्मत्वं, अन्यथा प्रकृतहानाऽप्रकृतप्रक्रियाप्रसङ्गादिति। अत्रोच्यते, यद्यप्यन्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्मेति न श्रूयते तथा-

इति। वृत्तिकारमतं दूषयति ॥ इदं त्विति ॥ इह परव्याख्यायां विकारार्थके मयटि बुद्धिस्थे सत्यकस्मात् कारणं विना एकप्रकरणस्थस्य मयटः पूर्वं विकारार्थकत्वं, अन्ते प्राचुर्यार्थकत्वमित्यर्धजरतीयं कथमिवकेन दृष्टान्तेन आश्रीयत इति इदं वक्तव्यमित्यन्वयः। प्रश्नं मत्वाशङ्कते ॥ मान्त्रेति ॥ स्फुटमुत्तरम्। किमान्तरं इति न श्रूयते किं वा वस्तुतोऽप्यान्तरं ब्रह्म न श्रूयत इति विकल्प्य आद्यमङ्गीकरोति ॥ अत्रोच्यते यद्यपीति ॥ विकारप्रायपाठानुगृहीतमयट्श्रुतेः सावयव-

पि नानन्दमयस्य ब्रह्मत्वं, यत आनन्दमयं प्रकृत्य श्रूयते "तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्म पुच्छं प्रतिष्ठा" इति । तत्र यद्ब्रह्म मन्त्रवर्णे प्रकृतं "सत्यं ज्ञानमनन्तं ब्रह्म" इति तदिह ब्रह्म पुच्छं प्रतिष्ठेत्युच्यते, तद्विजिज्ञापयिषयैवान्नमयादय आनन्दमयपर्यन्ताः पञ्चकोशाः कल्प्यन्ते, तत्र कुतः प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गः । नन्वानन्दमयस्यावयवत्वेन ब्रह्म पुच्छं प्रतिष्ठेत्युच्यते । अन्नमयादीनामिवेदं पुच्छं प्रतिष्ठेत्यादि, तत्र कथं ब्रह्मणः स्वप्रधानत्वं शक्यं विज्ञातुं, प्रकृत्वादिति ब्रूमः । नन्वानन्दमं··

त्वलिङ्गाच्चेत्याह ॥ तथापीति ॥ इष्टार्थस्य दृष्ट्या जातं सुखं प्रियं, स्मृत्याऽऽमोदः, स चाभ्यासात् प्रकृष्टः प्रमोदः, आनन्दस्तु कारणं बिम्बचैतन्यमात्मा, शिरःपुच्छयोर्मध्यकायः ब्रह्म शुद्धमिति श्रुत्यर्थः । द्वितीयं प्रत्याह ॥ तत्र यदिति ॥ यन्मन्त्रे प्रकृतं गुहानिहितत्वेन सर्वान्तरं ब्रह्म तदिह पुच्छवाक्ये ब्रह्मशब्दात् प्रत्यभिज्ञायते तस्यैव विज्ञापनेच्छया पञ्चकोशरूपा गुहा प्रपञ्चिता, तत्र तात्पर्यं नास्तीति वक्तुं कल्प्यन्त इत्युक्तम् । एवं पुच्छवाक्ये प्रकृतस्वप्रधानब्रह्मपरे सति न प्रकृतहान्यादिदोष इत्यर्थः । ब्रह्मणः प्रधानत्वं पुच्छश्रुतिविरुद्धमिति शङ्कते ॥ नन्विति ॥ अत्र ब्रह्मशब्दात् प्रकृतस्वप्रधानब्रह्मप्रत्यभिज्ञाने सति पुच्छशब्दविरोधप्राप्तावेकस्मिन् वाक्ये प्रथमचरमश्रुतशब्दयोराद्यस्यानुपसञ्जातविरोधिनो बलीयस्त्वात् पुच्छ-

यावयवत्वेनापि ब्रह्मणि विज्ञायमाने न प्रकृतत्वं हीयते आनन्दमयस्य ब्रह्मत्वादिति। अत्रोच्यते तथा सति तदेव ब्रह्मानन्दमय आत्मावयवी तदेव च ब्रह्म पुच्छं प्रतिष्ठावयव इत्यसामञ्जस्यं स्यात् । अन्यतरपरिग्रहे तु युक्तं ब्रह्म पुच्छं प्रतिष्ठेत्यत्रैव ब्रह्मनिर्देश आश्रयितुं ब्रह्मशब्दसंयोगान्नानन्दमयवाक्ये ब्रह्मशब्दसंयोगाभावादिति। अपि च ब्रह्म पुच्छं प्रतिष्ठेति उक्त्वेदमुच्यते "तदप्येष श्लोको भवति, असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः" इति। अस्मिंश्च श्लोकेऽननुकृष्यानन्दमयं ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद्गम्यते ब्रह्म पुच्छं प्रतिष्ठेत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति। न चानन्दमयस्यात्मनो भावाभावशङ्का युक्ता प्रियमोदादिविशेषस्यानन्दमयस्य सर्वलोकप्रसिद्धत्वात्। कथं पुनः स्वप्रधानं सद्ब्रह्मानन्दम-

शब्देन प्राप्तगुणत्वस्य बाध इति मत्वाह ॥ प्रकृतत्वादिति ॥ प्रकरणस्यान्यथासिद्धिमाह ॥ नन्विति ॥ एकस्यैव गुणत्वं प्रधानत्वं च विरुद्धमित्याह ॥ अत्रोच्यत इति ॥ तत्र विरोधनिरासायान्यतरस्मिन् वाक्ये ब्रह्मस्वीकारे पुच्छवाक्ये ब्रह्म स्वीकार्यमित्याह ॥ अन्यतरेति ॥ वाक्यशेषाच्चैवमित्याह ॥ अपि चेति ॥ तत् तत्र ब्रह्मणि श्लो-

यस्य पुच्छत्वेन निर्दिश्यते ब्रह्म पुच्छं प्रतिष्ठेति। नैष दोषः पुच्छवत् पुच्छं प्रतिष्ठा परायणमेकनीडं लौकिकस्यानन्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते नावयवत्वम्। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुत्यन्तरात्। अपि चानन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्माभ्युपगन्तव्यम्। निर्विशेषं तु ब्रह्मवाक्यशेषे श्रूयते वाङ्मनसयोरगोचरत्वाभिधानात्, "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह", "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति। अपि चानन्दप्रचुर इ-

कोऽपीत्यर्थः। पुच्छशब्दस्य गतिं पृच्छति॥ कथं पुनरिति॥ त्वयाऽपि पुच्छशब्दस्य मुख्यार्थो वक्तुमशक्यः ब्रह्मण आनन्दमयलाङ्गूलत्वाभावात् पुच्छदृष्टिलक्षणायां चाधारलक्षणा युक्ता प्रतिष्ठापदयोगात्, ब्रह्मशब्दस्य मुख्यार्थलाभाच्च। त्वत्पक्षे ब्रह्मपदस्याप्यवयवलक्षकत्वादित्याह॥ नैष दोष इति॥ पुच्छमित्याधारत्वमात्रमुक्तं प्रतिष्ठेत्येकनीडत्वम् एकं मुख्यं नीडम् अधिष्ठानं सोपादानस्य जगत इत्यर्थः। ननु वृत्तिकारैरपि तैत्तिरीयवाक्यं ब्रह्मणि समन्वितम् दृष्टं, तत्र किमुदाहरणभेदेनेत्याशङ्क्याह॥ अपि चेति॥ यत्र सविशेषत्वं तत्र वाङ्मनसगोचरत्वमिति व्याप्तेरत्र व्यापकाभावोक्त्या निर्विशेषमुच्यत इत्याह॥ निर्विशेषमिति॥ निवर्तन्ते अशक्ता इत्यर्थः। सविशेषस्य मृषात्वादभयं च युक्तं, अतो निर्विशेषज्ञानार्थं पुच्छवाक्यमेवोदाहरणमिति भावः। प्राचुर्यार्थकमयटा सविशेषोक्तौ निर्विशेष-

त्युक्ते दुःखास्तित्वमपि गम्यते प्राचुर्यस्य लोके प्रतियोग्यल्पत्वापेक्षत्वात्। तथाच सति "यत्र नान्यत् पश्यति, नान्यच्छृणोति, नान्यद्विजानाति, स भूमा" इति भूम्नि ब्रह्मणि तद्व्यतिरिक्ताभावश्रुतिरुपरुध्येत[१]। प्रतिशरीरं च प्रियादिभेदादानन्दमयस्यापि भिन्नत्वं, ब्रह्म तु न प्रतिशरीरं भिद्यते "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यानन्त्यश्रुतेः, "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इति च श्रुत्यन्तरात्। न चानन्दमयस्याभ्यासः श्रूयते, प्रातिपदिकार्थमात्रमेव हि सर्वत्राभ्यस्यते "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति, को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति सैषानन्दस्य मीमांसा भवति" "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन"

श्रुतिबाध उक्तः। दोषान्तरमाह ॥अपि चेति॥ प्रत्ययार्थत्वेन प्रधानस्य प्राचुर्यस्य प्रकृत्यर्थो विशेषणं, विशेषणस्य यः प्रतियोगी विरोधीति तस्याल्पत्वमपेक्षते यथा विप्रमयो ग्राम इति शूद्राल्पत्वम्। अस्तु को दोषस्तत्राह ॥ तथा चेति ॥ प्रकृत्यर्थप्राधान्ये त्वयं दोषो नास्ति, प्रचुरप्रकाशः सवितेत्यत्र तमसोल्पस्याप्यभानात् परं त्वानन्दमयपदस्य प्रचुरानन्दे लक्षणादोषः स्यादिति मन्तव्यम्। किंच भिन्नत्वाद् घटवन्न ब्रह्मतेत्याह ॥प्रतिशरीरमिति॥ नन्वभ्यस्यमानानन्द-

[१] विरुध्येदित्यर्थः।

"आनन्दो ब्रह्मेति व्यजानात्" इति चायदि चानन्दमयशब्दस्य ब्रह्मविषयत्वं निश्चितं भवेत् तत उत्तरेष्वप्यानन्दमयाभ्यासः कल्प्येत, न त्वानन्दमयस्य ब्रह्मत्वमस्ति प्रियशिरस्त्वादिभिर्हेतुभिरित्यवोचाम। तस्माच्छ्रुत्यन्तरे "विज्ञानमानन्दं ब्रह्म" इति आनन्दप्रातिपदिकस्य ब्रह्मणि प्रयोगदर्शनात् "यदेष आकाश आनन्दो न स्यात्" इत्यादिर्ब्रह्मविषयः प्रयोगो न त्वानन्दमयाभ्यास इत्यवगन्तव्यम्। यस्त्वयं मयडन्तस्यैवानन्दशब्दस्याभ्यास "एतमानन्दमयमात्मानमुपसङ्क्रामतीति न तस्य ब्रह्मविषयत्वमस्ति विकारात्मनामेवान्नमयादीनामनात्मनामुपसङ्क्रमितव्यानां प्रवाहे पठितत्वात्। नन्वानन्दमयस्योपसङ्क्रमितव्यस्यान्नमयादिवदब्रह्मत्वे सति नैव विदुषो ब्रह्मप्राप्तिफलं निर्दिष्टं भवेत्। नैष दोषः। आनन्दमयोपसङ्क्रमण-

पदं लक्षणयानन्दमयपरं इत्यभ्यासासिद्धिरित्यत आह ॥ **यदि चेति** ॥ आनन्दमयस्य ब्रह्मत्वे निर्णीते सत्यानन्दपदस्य तत्परत्वज्ञानादभ्याससिद्धिः तत्सिद्धौ तन्निर्णय इति परस्पराश्रय इति भावः। अयमभ्यासः पुच्छब्रह्मण इत्याह ॥ **तस्मादिति** ॥ उपसंक्रमणं बाधः ॥ ननु सय एवंविदिति ब्रह्मविदं प्रक्रम्योपसंक्रमणवाक्येन फलं निर्दिश्यते तत्तस्याब्रह्मत्वेन सिध्यतीति शङ्कते ॥ **नन्विति** ॥ उपसंक्रमणं प्राप्तिरित्य-

निर्देशेनैव विदुषः पुच्छप्रतिष्ठाभूतब्रह्मप्राप्तेः फलस्य निर्दिष्टत्वात् "तदप्येष श्लोको भवति, यतो वाचो निवर्तन्ते" इत्यादिना च प्रपंच्यमानत्वात्। या त्वानन्दमयसन्निधाने "सोऽकामयत, बहु स्यां प्रजायेय" इतीयं श्रुतिरुदाहृता सा "ब्रह्म पुच्छं प्रतिष्ठा" इत्यनेन सन्निहिततरेण ब्रह्मणा सम्बध्यमाना नानन्दमयस्य ब्रह्मतां प्रतिबोधयति, तदपेक्षत्वाच्चोत्तरस्य ग्रन्थस्य "रसो वै सः" इत्यादेर्नानन्दमयविषयता। ननु "सोऽकामयत" इति ब्रह्मणि पुंलिङ्गनिर्देशो नोपपद्यते। नायं दोषः। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यत्र पुंलिङ्गेनाप्यात्मशब्देन ब्रह्मणः प्रकृतत्वात्। यत्तु भार्गवी वारुणी विद्या "आनन्दो ब्रह्मेति व्यजानात्" इति तस्यां मयडश्रवणात् प्रिय-

ङ्गीकृत्य विशिष्टप्राप्त्युक्त्या विशेषणप्राप्तिफलमुक्तमित्याह॥नैष इति॥ ज्ञानेनाकाशानां बाधसत्त्वादिति सिद्धान्ते बाधावधिप्रत्यगानन्दलाभोऽर्थादुक्त उत्तरश्लोकेन स्फुटीकृत इत्याह॥ तदपीति ॥ तदपेक्षत्वादिति कामयितृपुच्छब्रह्मविषयत्वादित्यर्थः। यदुक्तं पञ्चमस्थानस्थत्वादानन्दमये ब्रह्मवल्ली समाप्ता भृगुवल्लीवदिति तत्राह॥ यत्त्विति॥ या त्वित्यर्थः। मयट्श्रुत्या सावयवत्वादिलिङ्गेन च स्थानं बा-

१ उपसंक्रमणम्।

शिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्मत्वम्। तस्मादणुमात्रमपि विशेषमनाश्रित्य न स्वत एव प्रियशिरस्त्वादि ब्रह्मण उपपद्यते, न चेह सविशेषं ब्रह्म प्रतिपिपादयिषितं वाङ्मनसगोचरातिक्रमश्रुतेः। तस्मादन्नमयादिष्विवानन्दमयेऽपि विकारार्थ एव मयट् विज्ञेयो न प्राचुर्यार्थः। सूत्राणि त्वेवं व्याख्येयानि ब्रह्म पुच्छं प्रतिष्ठेत्यत्र किमानन्दमयस्यावयवत्वेन ब्रह्म विवक्ष्यते, उत स्वप्रधानत्वेनेति। पुच्छशब्दादवयवत्वेनेति प्राप्त उच्यते। "आनन्दमयोऽभ्यासात्"। आनन्दमय आत्मेत्यत्र ब्रह्म पुच्छं प्रतिष्ठेति स्वप्रधानमेव ब्रह्मोपदिश्यतेऽभ्यासात्। "असन्नेव स भवति," इत्यस्मिन्निगमनश्लोके

ध्यमिति भावः। गोचरातिक्रमो गोचरत्वाभावः। वेदसूत्रयोर्विरोधे गुणे त्वन्याय्यकाल्पनेति सूत्राणि अन्यथा नेतव्यानीत्याह ॥ सूत्राणीति ॥ पूर्वमीक्षतेः संशयाभावात् इति युक्त्या गौणप्रायपाठो न निश्चायक इत्युक्तम्। तर्हि अत्र पुच्छपदस्याधारावयवयोर्लक्षणासाम्यात् संशयोऽस्तीत्यवयवप्रायपाठो निश्चायक इति पूर्वाधिकरणसिद्धान्तयुक्त्यभावेन पूर्वपक्षयति॥पुच्छशब्दादिति॥तथा च प्रत्युदाहरणसङ्गतिः पूर्वपक्षे सगुणोपास्तिः सिद्धान्ते निर्गुणप्रमितिः फलं वेदान्तवाक्यसमन्वयोक्तेः श्रुत्यादिसङ्गतयः स्फुटा एव, सूत्रस्थानन्दमयपदेन तद्वाक्यस्थं ब्रह्मपदं लक्ष्यते। विक्रियतेऽनेनेति विकारोऽवयवः प्रायापत्तिरिति अवयवक्रमस्य बुद्धौ प्राप्तिरित्यर्थः। अत्र हि प्रकृतस्य ब्रह्मणो ज्ञानार्थं कोशाः पक्षित्वेन

ब्रह्मण एव केवलस्याभ्यस्यमानत्वात्। विकारशब्दान्नेति चेन्न प्राचुर्यात्। विकारशब्देनावयवशब्दोऽभिप्रेतः, पुच्छमित्यवयवशब्दान्न स्वप्रधानत्वं ब्रह्मण इति यदुक्तं तस्य परिहारो वक्तव्यः। अत्रोच्यते. नायं दोषः, प्राचुर्यादप्यवयवशब्दोपपत्तेः। प्राचुर्यं प्रायापत्तिरवयवप्रायवचनमित्यर्थः। अन्नमयादीनां हि शिरआदिषु पुच्छान्तेषु अवयवेषूक्तेष्वानन्दमयस्यापि शिरआदीन्यवयवान्तराण्युक्त्वाऽवयवप्रायापत्त्या ब्रह्म पुच्छं प्रतिष्ठेत्याह नावयवविवक्षया यत्कारणमभ्यासादिति स्वप्रधानत्वं ब्रह्मणः समर्थितम्। "तद्धेतुव्यपदेशाच्च"। सर्वस्य च विकार-

कल्प्यन्ते नात्र तात्पर्यमस्ति, तत्रानन्दमयस्यापि अवयवान्तरोक्त्यनन्तरं कस्मिंश्चित् पुच्छे वक्तव्ये प्रकृतं ब्रह्म पुच्छपदेनोक्तं तस्यानन्दमयाधारत्वेनावश्यं वक्तव्यत्वादित्यर्थः॥ **तद्धेतुव्यपदेशाच्च**॥ तस्य ब्रह्मणः सर्वकार्यहेतुत्वव्यपदेशात् प्रियादिविशिष्टत्वाकारेणानन्दमयस्य जीवस्य कार्यत्वात्तं प्रति शेषत्वं ब्रह्मणो न युक्तमित्यर्थः। मान्त्रवर्णिकमेव च गीयते "ब्रह्मविदाप्नोति पर"मिति यस्य ज्ञानान्मुक्तिरुक्ता यत् सत्यं ज्ञानमिति मन्त्रोक्तं ब्रह्म तदत्रैव पुच्छवाक्ये गीयते ब्रह्मपदसंयोगात्, नानन्दमयवाक्य इत्यर्थः। नेतरोऽनुपपत्तेः। इतर आनन्दमयो जीवोऽत्र न प्रतिपाद्यः सर्वस्रष्टृत्वाद्यनुपपत्तेरित्यर्थः। भेदव्यपदेशाच्च। अयमानन्दमयो ब्रह्मरसं लब्ध्वानन्दी भवतीति, भेदोक्तेश्च तस्याप्रतिपाद्यतेत्यर्थः। आनन्दमयो ब्रह्म तैत्तिरीयकपञ्चम-

जातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते "इदं सर्वमसृजत यदिदं किं च" इति।न च कारणं सद्ब्रह्म स्वविकारस्यानन्दमयस्य मुख्यया वृत्त्याऽवयव उपपद्यते । अपराण्यपि सूत्राणि यथासम्भवं पुच्छवाक्यनिर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्याणि ॥ १९ ॥

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

इदमाम्नायते "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्या-

स्थानस्थत्वात् भृगुवल्लीस्थानन्दवदित्याशङ्क्याह । "कामाच्च नानुमानापेक्षा" काम्यत इति काम आनन्दः तस्य भृगुवल्ल्यां पञ्चमस्य ब्रह्मत्वदृष्टेरानन्दमयस्यापि ब्रह्मत्वानुमानापेक्षा न कार्या, विकारार्थकमयड्विरोधादित्यर्थः । भेदव्यपदेशश्चेत् सगुणं ब्रह्मात्र वेद्यं स्यादित्याशङ्क्याह । "अस्मिन्नस्य च तद्योगं शास्ति" । गुहानिहितत्वेन प्रतीचि स एक इत्युपसंहृते पुच्छवाक्योक्ते ब्रह्मण्यहमेव परं ब्रह्मेति प्रबोधवत् आनन्दमयस्य यदा ह्येति शास्त्रे ब्रह्मभावं शास्ति, अतो निर्गुणब्रह्मैक्यज्ञानार्थं जीवभेदानुवाद इत्यभिप्रेत्याह ॥ **अपराण्यपीति** ॥ अन्तस्तद्धर्मोपदेशात् । छान्दोग्यवाक्यमुदाहरति ॥ **अथ य इति** ॥ अथेत्युपास्तिप्रारम्भार्थः । हिरण्मयो ज्योतिर्विकारः, पुरुषः पूर्णोऽपि मूर्त्तिमानुपासकैर्दृश्यते । मूर्त्तिमाह ॥ **हिरण्येति** ॥ प्रणखो नखाग्रं तेन सहेत्यभिविधावाङ् । नेत्रयोर्विशेषमाह ॥ **तस्येति** ॥ कपेर्मर्कटस्य आसः पुच्छभागोऽत्यन्ततेजस्वी तत्तुल्यं पुण्डरीकं यथा

सं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स ए-
ष सर्वेभ्यः पाप्मभ्य उदित, उदेति ह वै सर्वेभ्यः
पाप्मभ्यो य एवं वेद" इत्यधिदैवतम्। अथा-
ध्यात्मम् "अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते"
इत्यादि। तत्र संशयः। किं विद्याकर्मातिशयव-
शात् प्राप्तोत्कर्षः कश्चित् संसारी सूर्यमण्डले च-
क्षुषि चोपास्यत्वेन श्रूयते, किं वा नित्यसिद्धः
परमेश्वर इति। किं तावत् प्राप्तं, संसारीति, कुतः,
रूपवत्त्वश्रवणात्। आदित्यपुरुषे तावद्धिरण्य-
श्मश्रुरित्यादिरूपमुदाहृतं, अक्षिपुरुषेऽपि तदे-
वातिदेशेन प्राप्यते "तस्यैतस्य तदेव रूपं यद-
मुष्य रूपम्" इति। न च परमेश्वरस्य रूपवत्त्वं यु-
क्तं "अशब्दमस्पर्शमरूपमव्ययम्" इति श्रु-

दीप्तिमदेवं तस्य पुरुषस्याक्षिणि सद्योविकसितरक्ताम्भोजनयन इ-
त्यर्थः। उपासनार्थमादित्यमण्डलं स्थानं रूपं चोक्त्वा नाम करोति ॥
॥ तस्योदिति ॥ उन्नाम निर्वक्ति ॥ स इति ॥ उदित उद्गतः सर्वपा-
प्मास्पृष्ट इत्यर्थः। उपासनार्थं नामज्ञानफलमाह ॥ उदेति हेति ॥ देव-
तास्थानम् आदित्यमधिकृत्योपास्त्युक्त्यनन्तरमात्मानं देहमधिकृत्या-
पि तदुक्तिरित्याह ॥ अथेति ॥ पूर्वत्र ब्रह्मपदमानन्दमयपदमानन्द-
पदाभ्यासश्चेति मुख्यत्रितयादि बहुप्रमाणवशान्निर्गुणनिर्णयवद्रूपव-
त्त्वादिबहुप्रमाणवशाज्जीवो हिरण्मय इति पूर्वसिद्धान्तदृष्टान्तसङ्ग-
त्या पूर्वमुत्सर्गतः सिद्धनिर्गुणसमन्वयस्यापवादार्थं पूर्वपक्षयति ॥
॥ संसारीति ॥ अत्र पूर्वोत्तरपक्षयोर्जीवब्रह्मणोरुपास्तिः फलं, अक्षि-

तेः। आधारश्रवणाच्च "य एषोऽन्तरादित्ये य एषोऽन्तरक्षिणि" इति। न ह्यनाधारस्य स्वमहिमप्रतिष्ठस्य सर्वव्यापिनः परमेश्वरस्याधार उपदिश्येत "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इति "आकाशवत्सर्वगतश्च नित्यः" इति च श्रुती भवतः। ऐश्वर्यमर्यादाश्रुतेश्च "स एष ये चामुष्मात् परांचो लोकास्तेषां चेष्टे देवकामानां च" इत्यादित्यपुरुषस्यैश्वर्यमर्यादा "स एष चैतस्मादर्वांचो लोकास्तेषां चेष्टे मनुष्यकामानां च" इत्यक्षिपुरुषस्य। न च परमेश्वरस्य मर्यादावदैश्वर्यं युक्तं "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" इत्यविशेषश्रुतेः। तस्मान्नाक्ष्यादित्ययोरन्तः परमेश्वर इत्येवं प्राप्ते ब्रूमः, अन्तस्तद्धर्मोपदेशात्, इति "य एषोऽन्तरादित्ये

णीत्याधारश्रवणाच्च संसारीति सम्बन्धः। श्रुतिमाह॥ स एष इति॥ आदित्यस्थः पुरुषः, अमुष्मादादित्यादूर्ध्वगा ये केचन लोकास्तेषामीश्वरो देवभोगानां चेत्यर्थः। स एषोऽक्षिस्थः पुरुष एतस्मादक्ष्णोऽधस्तना ये लोका ये च मनुष्यकामा भोगास्तेषामीश्वर इति मर्यादा श्रूयते। अतः श्रुतेश्च संसारीत्यर्थः। एष सर्वेश्वर इत्यविशेषश्रुतेरिति सम्बन्धः। भूताधिपतिर्यमः, भूतपाल इन्द्रादिश्च एष एव। किञ्च जलानामसङ्कराय लोके विधारको यथा सेतुरेवमेषां लोकानां वर्णाश्रमादीनां मर्यादा-

य एषोऽन्तरक्षिणि" इति च श्रूयमाणः पुरुषः स परमेश्वर एव न संसारी. कुतः। तद्धर्मोपदेशात्। तस्य हि परमेश्वरस्य धर्मा इहोपदिष्टास्तद्यथा "तस्योदिति नाम" इति श्रावयित्वा "अस्यादित्यपुरुषस्य नाम स एष सर्वेभ्यः पाप्मभ्य उदितः" इति सर्वपाप्मापगमेन निर्वक्ति, तदेव च कृतनिर्वचनं नामाक्षिपुरुषस्याप्यतिदिशति "यन्नाम तन्नाम" इति। सर्वपाप्मापगमश्च परमात्मन एव श्रूयते "य आत्मा अपहतपाप्मा" इत्यादौ। तथा "चाक्षुषे पुरुषे सैव ऋक् तत् साम तदुक्थं तद्यजुस्तद्ब्रह्म" इत्यृक्सामाद्यात्मकतां निर्धारयति, सा च परमेश्वरस्योपपद्यते सर्वकारणत्वात् सर्वात्मकत्वोपपत्तेः। पृथिव्यग्न्या-

हेतुत्वात् सेतुरेष एव, अतः सर्वेश्वर इत्यर्थः। सूत्रं व्याचष्टे ॥ **य एष इति** ॥ यद्यप्येकस्मिन् वाक्ये प्रथमश्रुतानुसारेण चरमं नेयं, तथाप्यत्र प्रथमं श्रुतं रूपवत्त्वं निष्फलं ध्यानार्थमीश्वरे नेतुं शक्यं च सर्वपापासङ्गित्वं सर्वात्मैकत्वं तु सफलं जीवे नेतुमशक्यं चेति प्रबलं न च "न ह वै देवान् पापं गच्छति" इति श्रुतेरादित्यजीवस्यापि पाप्मास्पर्शित्वमिति वाच्यम्, श्रुतेरधुना कर्मानधिकारिणां देवानां क्रियमाणपाप्मासम्बन्धे तत्फलास्पर्शे वा तात्पर्यात् तेषां सञ्चितपापाभावे "क्षीणे पुण्ये मर्त्यलोकं विशन्ती"ति अयोगादित्यभिप्रेत्याह ॥ **सर्वपाप्मापगमश्च परमात्मन एवेति** ॥ सार्वात्म्यमाह ॥ **तथेति** ॥ अत्र तच्छब्दैश्चाक्षुषः पुरुष उच्यते ऋगाद्यपेक्षया लिङ्गव्यत्ययः॥ उ-

द्यात्मके चाधिदैवतमृक्सामे वाक्प्राणाद्यात्मके चाध्यात्ममनुक्रम्याह "तस्यर्क्क साम च गेष्णा-वित्यधिदैवतं तथाध्यात्ममपि "यावमुष्य गेष्णौ तौ गेष्णौ" इति। तच्च सर्वात्मकत्वे सत्येवोपपद्यते। "तद्य इमे वीणायां गायन्त्येतं त्वेव ते गायन्ति तस्मात्ते धनसनयः" इति च लौकिकेष्वपि गा-नेष्वस्यैव गीयमानत्वं दर्शयति। तच्च परमेश्वर-परिग्रहे घटते॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्॥

इति भगवद्गीतादर्शनात् लोककामेशितृत्वमपि

कथं शस्त्रविशेषः। तत्साहचर्यात् साम स्तोत्रम् उक्थादन्यच्छस्त्रमृंगु-च्यते, यजुर्वेदो यजुः, ब्रह्म त्रयो वेदा इत्यर्थः॥ **पृथिव्यग्न्याद्या-त्मक इति**॥ अधिदैवतमृक् पृथिव्यन्तरिक्षद्युनक्षत्रादित्यगतशुल्कभा-रूपा पञ्चविधा श्रुत्युक्ता, साम चाग्निवाय्वादित्यचन्द्रादित्यगताति-कृष्णरूपमुक्तं पञ्चविधम्। अध्यात्मं तु ऋग्वाक्चक्षुःश्रोत्राक्षिस्थ-शुक्लभारूपा चतुर्विधा, साम च प्राणच्छायात्ममनोऽक्षिगतातिनील-रूपं चतुर्विधमुक्तम्। एवं क्रमेण ऋक्सामे अनुक्रम्याह श्रुतिः॥**तस्ये-ति**॥ यौ सर्वात्मकऋक्सामात्मकौ गेष्णावमुष्यादित्यस्थस्य तावेवा-क्षिस्थस्य गेष्णौ पर्वणीत्यर्थः॥ **तच्चेति**॥ ऋक्सामगेष्णत्वमित्यर्थः। सर्वगानगेयत्वं लिङ्गान्तरमाह॥ **तद्य इति**॥ तत्तत्र लोके धनस्य सनि-र्लाभो येषां ते धनसनयो विभूतिमन्त इत्यर्थः। ननु लोके राजानो गी-यन्ते नेश्वर इत्यत आह॥ **यद्यदिति**॥ पशुवित्तादिर्विभूतिः, श्रीः

निरङ्कुशं श्रूयमाणं परमेश्वरं गमयति। यत्तूक्तं हिरण्यश्मश्रुरित्यादिरूपश्रवणं परमेश्वरे नोपपद्यते इत्यत्र ब्रूमः, स्यात् परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्।

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं मैवं मां द्रष्टुमर्हसि॥

इति स्मरणात्। अपि च, यत्र तु निरस्तसर्वविशेषं पारमेश्वरं रूपमुपदिश्यते, भवति तत्र शास्त्रं "अशब्दमस्पर्शमरूपमव्ययम्" इत्यादि। सर्वकारणत्वात्तु विकारधर्मैरपि कैश्चिद्विशिष्टः परमेश्वर उपास्यत्वेन निर्दिश्यते "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" इत्यादिना, तथा हिरण्यश्मश्रुत्वादिनिर्देशोऽपि भविष्यति। यदप्याधारश्रवणान्न परमेश्वर इत्यत्रोच्यते, स्वमहिमप्रतिष्ठस्याप्याधारविशेषोपदेश उपासनार्थो भविष्यति सर्वगतत्वाद्ब्रह्मणो व्योमवत् सर्वा-

कान्तिः। ऊर्जितत्वं बलं, तद्युक्तं सत्त्वं राजादिकं मदंश एवेति तज्ज्ञानमीश्वरस्यैवेत्यर्थः निरङ्कुशमनन्याधीनं, एषा विचित्ररूपा मूर्तिर्माया विकृतित्वान्माया मया सृष्टेत्यर्थः। यदुक्तमशब्दमित्यादिवाक्यं तत् ज्ञेयपरमित्याह ॥ अपि चेति ॥ तर्हि रूपं कुतस्तत्राह ॥ सर्वेति ॥ यत्र तूपास्यत्वेनोच्यते तत्रेत्यध्याहृत्य सर्वकारणत्वात् प्राप्तरूपवत्त्वं सर्वकर्मेत्यादिश्रुत्या निर्दिश्यत इति योजना। मर्यादावदैश्वर्य-

न्तरत्वोपपत्तेः । ऐश्वर्यमर्यादाश्रवणमप्यध्या-
त्माधिदैवतविभागापेक्षमुपासनार्थमेव, तस्मा-
त्परमेश्वर एवाक्ष्यादित्ययोरन्तरुपदिश्यते ॥ २० ॥

## भेदव्यपदेशाच्चान्यः ॥ २१ ॥

अस्ति च आदित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" इति श्रुत्यन्तरे भेदव्यपदेशात् । तत्र ह्यादित्यादन्तरो यं आदित्यो न वेदेति वेदितुरादित्यात् विज्ञानात्मनोऽन्योऽन्तर्यामीति स्पष्टं निर्दिश्यते स एवेहाप्यन्तरादित्ये

मीश्वरस्य नेत्युक्तं निराकरोति ॥ ऐश्वर्येति ॥ अध्यात्माधिदैवतध्यानयोर्विभागः पृथक्प्रयोगः, तदपेक्षमेव न त्वैश्वर्यस्य परिच्छेदार्थमित्यर्थः ॥ २० ॥ ननु उपास्योद्देशेनोपास्तिर्विधिर्विधेयक्रियाकर्मणो व्रीह्यादिवदन्यतः सिद्धिर्वाच्येत्याशङ्क्याह ॥ भेदेति ॥ आदित्यजीवादीश्वरस्य भेदोक्तेः श्रुत्यन्तरे जीवादन्य ईश्वरः सिद्ध इति सूत्रार्थमाह ॥ अस्तीति ॥ आदित्ये स्थितरश्मिनिरासार्थमादित्यादन्तर इति । जीवं निरस्यति ॥ यमिति ॥ अशरीरस्य कथं नियन्तृत्वं तत्राह ॥ यस्येति ॥ अन्तर्यामिपदार्थमाह ॥ य इति ॥ तस्यानात्मत्वनिरासायाह ॥ एष त इति ॥ ते तव स्वरूपमित्यर्थः, आदित्यान्तरत्वश्रुतेः समानत्वादित्यर्थः । तस्मात् पर एवादित्यादिस्थानक उद्गी-

पुरुषो भवितुमर्हति श्रुतिसामान्यात्। तस्मात् परमेश्वर एवेहोपदिश्यत इति सिद्धम्॥ २१॥

## आकाशस्तल्लिङ्गात्॥ २२॥

इदमामनन्ति "अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इति। तत्र संशयः। किमाकाशशब्देन परं ब्रह्माभिधीयते, उत भूताकाशमिति। कुतः संशयः। उभयत्र प्रयोगदर्शनात्। भूतविशेषे तावत् सुप्रसिद्धो लोकवेदयोराकाशशब्दो, ब्रह्मण्यपि क्वचित् प्रयुज्यमानो दृश्यते, यत्र वाक्यशेषवशादसाधारणगुणश्रवणाद्वा निर्धारितं ब्रह्म भवति यथा "यदेष आकाश आनन्दो न स्यात्" इति, "आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति चैवमादौ, अतः संशयः। किं पुनरत्र यु-

थे उपास्य इति सिद्धम्॥ २१॥ भवतु रूपवत्त्वादिदुर्बललिङ्गानां पापास्पर्शित्वाद्यव्यभिचारिब्रह्मलिङ्गैरन्यथानयनं, इह त्वाकाशपदश्रुतिः लिङ्गाद्बलीयसीति प्रत्युदाहरणेन प्राप्ते प्रत्याह॥ आकाशस्तल्लिङ्गादिति॥ छान्दोग्यवाक्यमुदाहरति॥ इदमिति॥ शालावत्यो ब्राह्मणो जैवलिं राजानं पृच्छति, अस्य पृथ्वीलोकस्यान्यस्य च क आधार

क्तं भूताकाशमिति, कुतः, तद्धि प्रसिद्धतरेण प्रयोगेण शीघ्रं बुद्धिमारोहति। न चायमाकाशशब्द उभयोः साधारणः शक्यो विज्ञातुं, अनेकार्थत्वप्रसङ्गात्। तस्माद्ब्रह्मणि गौण आकाशशब्दो भवितुमर्हति। विभुत्वादिभिर्हि बहुभिर्धर्मैः सदृशमाकाशेन ब्रह्म भवति, न च मुख्यसम्भवे गौणोऽर्थो ग्रहणमर्हति, सम्भवति चेह मुख्यस्यैवाकाशस्य ग्रहणम्। ननु भूताकाशपरिग्रहे वाक्यशेषो नोपपद्यते "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" इत्यादिः। नैष दोषो, भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वोपपत्तेः। विज्ञायते हि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः" इत्यादि। ज्यायस्त्वपरायणत्वे अपि भूतान्तरापेक्षयोपपद्येते भूताकाशस्यापि, तस्मादाकाशशब्देन भूताकाशस्य ग्रहणमित्येवं प्राप्ते ब्रूमः, आकाशस्तल्लिङ्गात्। आकाशशब्देनेह ब्र-

इति। राजा ब्रूते आकाश इतिहेति॥ यदेष आकाश इत्यानन्दत्वस्यासाधारणस्य श्रवणादाकाशो ब्रह्मेत्यवधारितम्। आकाशो वै नामेत्यत्र तद्ब्रह्मेति वाक्यशेषादिति विभागः। निर्वहिता उत्पत्तिस्थितिहेतुः, ते नामरूपे, यदन्तरा यस्माद्भिन्ने यत्र कल्पितत्वेन मध्ये स्त इति वार्थः। अत्र पूर्वपक्षे भूताकाशात्मनोद्गीथोपास्तिः, सिद्धान्ते ब्रह्मात्मना

ह्मणो ग्रहणं युक्तम्। कुतः। तल्लिङ्गात्। परस्य हि ब्रह्मण इदं लिङ्गं "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" इति। परस्माद्धि ब्रह्मणो भूतानामुत्पत्तिरिति वेदान्तेषु मर्यादा। ननु भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वं दर्शितम्। सत्यं दर्शितम्। तथापि मूलकारणस्य ब्रह्मणोऽपरिग्रहादाकाशादेवेत्यवधारणं सर्वाणीति च भूतविशेषणं नानुकूलं स्यात्। तथा "आकाशं प्रत्यस्तं यन्ति" इति ब्रह्मलिङ्गं "आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इति च ज्यायस्त्वपरायणत्वे, ज्यायस्त्वं ह्यनापेक्षिकं परमात्मन्येवैकस्मिन्नाम्नातं "ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" इति, तथा परायणत्वमपि परमकारणत्वात् परमात्मन्येवोपपन्नतरम्। श्रु-

इति फलम् उपास्ये स्पष्टब्रह्मलिङ्गवाक्यसमन्वयोक्तेरापादं श्रुत्यादिसङ्गतयः। स्पष्टमत्र भाष्यम्। तेजःप्रभृतिषु वाय्वादेरपि कारणत्वात् एवकारश्रुतिबाधः। सर्वश्रुतेश्चाकाशातिरिक्तविषयत्वेन सङ्कोचः स्यादित्याह ॥ सत्यं दर्शितमिति ॥ ब्रह्मणस्तु सर्वात्मकत्वात्तस्मादेव सर्वमिति श्रुतिर्युक्तेति भावः। तथा सर्वलयाधारत्वं निरतिशयमहत्त्वं स्थितावपि परमाश्रयत्वमित्येतानि स्पष्टानि ब्रह्मलिङ्गानीत्याह ॥ तथा आकाशमित्यादिना ॥ रातेर्धनस्य दातुः। रातिरिति पाठे बन्धु-

तिश्च भवति "विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणम्।" इति। अपि चान्तवत्त्वदोषेण शालावत्यस्य पक्षं निन्दित्वाऽनन्तं किञ्चिद्वक्तुकामेन जैवलिनाऽऽकाशः परिगृहीतः, तञ्चाकाशमुद्गीथे सम्पाद्योपसंहरति "स एष परो वरीयानुद्गीथः स एषोऽनन्तः" इति, तच्चानन्त्यं ब्रह्मलिङ्गम्। यत् पुनरुक्तं भूताकाशं प्रसिद्धिबलेन प्रथमतरं

रित्यर्थः। लिङ्गान्तरमाह॥ **अपि चेति**॥ दाल्भ्यशालावत्यौ ब्राह्मणौ राजा चेति त्रय उद्गीथविद्याकुशला विचारयामासुः किमुद्गीथस्य परायणमिति। तत्र स्वर्गादागताभिरद्भिर्जीवितेन प्राणेन क्रियमाणोद्गीथस्य स्वर्ग एव परायणमिति दाल्भ्यपक्षमप्रतिष्ठादोषेण शालावत्यो निन्दित्वा स्वर्गस्यापि कर्मद्वारा हेतुरयं लोकः प्रतिष्ठेत्युवाच। तं शालावत्यस्य पक्ष"मन्तवद्वै किल ते शालावत्य सामे"ति राजा निन्दित्वानन्तमेवाकाशं वक्ति भूताकाशोक्तावन्तवत्त्वदोषतादवस्थ्यादित्यर्थः। नन्वाकाशोऽनन्त इति न श्रुतम् इत्याशङ्क्याह॥ **तं चेति**॥ उद्गीथ आकाश एवेति सम्पादनात् उद्गीथस्यानन्तत्वादिकं न स्वत इति भावः। स उद्गीथावयव ओँकार एष आकाशात्मकः परः रसतमत्वादिगुणैरुत्कृष्टः। अतोऽक्षरान्तरेभ्यो वरीयान् श्रेष्ठ इत्यर्थः॥ पर इति अव्ययं सकारान्तं वा, परः कृत्स्नमिति प्रयोगात्। परश्चासौ वरेभ्योऽतिशयेन वरः परोवरीयान् इत्यर्थः। प्राथम्यात् श्रुतित्वाच्चाकाशशब्दो बलीयानित्युक्तं स्मारयति॥ **यत् पुनरिति**॥ एवकारसर्वशब्दानुगृहीतानन्त्यादिबहुलिङ्गानामनुग्रहाय "त्यजेदेकं कुलस्यार्थे" इति न्यायेनैकस्याः श्रुतेर्बाधो युक्त इत्याह॥ **अत्र ब्रूम इति**॥ आकाशपदाद्भूतस्यैव प्रथमप्रतीतिरिति नियमो नास्तीत्यपिशब्देन द्योतितम्।

प्रतीयत इति अत्र ब्रूमः, प्रथमतरं प्रतीतमपि सद्वाक्यशेषगतान् ब्रह्मगुणान् दृष्ट्वा न परिगृह्यते। दर्शितश्च ब्रह्मण्यप्याकाशशब्दः "आकाशो वै नामरूपयोर्निर्वहिता" इत्यादौ। तथाकाशपर्यायवाचिनामपि ब्रह्मणि प्रयोगो दृश्यते "ऋचोअक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः" "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" "ॐ कं ब्रह्म खं ब्रह्म खं पुराणम्" इति चैवमादौ। वाक्योपक्रमेऽपि वर्तमानस्याकाशशब्दस्य वाक्यशेषवशाद्युक्ता ब्रह्मविषयत्वावधारणा। "अग्निरधीतेऽनुवाकम्" इति हि वाक्योपक्रमगतोऽप्यग्निशब्दो माणवकविषयो दृश्यते। तस्मादाकाशशब्दं ब्रह्मेति सिद्धम्॥ २२॥

तत्र युक्तिमाह॥ दर्शितश्चेति॥ आकाशपदाद्गौणार्थस्य ब्रह्मणोऽपि प्रथमप्रतीतिरस्ति तस्य तत्पर्यायाणां च ब्रह्मणि प्रयोगप्राचुर्यादिति भावः। अक्षरे कूटस्थे व्योमन् व्योम्नि ऋचो वेदाः सन्ति प्रमाणत्वेन यस्मिन्नक्षरे विश्वे देवा अधिष्ठिता इत्यर्थः। ॐकारः कं सुखं ब्रह्म खं व्यापकमित्युपासीत श्रुत्यन्तरप्रयोगमाह॥ खं पुराणमिति॥ व्याप्यनादि ब्रह्मेत्यर्थः। कं ब्रह्म खं ब्रह्मेति छान्दोग्यं, ॐ खं ब्रह्म खं पुराणमिति बृहदारण्यकमिति भेदः। किं च तत्रैव प्रथमानुसारेणोत्तरं नेयं यत्र तन्नेतुं शक्यं, यत्र त्वशक्यं तत्रोत्तरानुसारेण प्रथमं नेयमित्याह॥ वाक्येति॥ तस्मादुपास्ये ब्रह्मणि वाक्यं समन्वितमित्युप-

## अतएव प्राणः ॥ २३ ॥

"उद्गीथे प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" इत्युपक्रम्य श्रूयते "कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता" इति। तत्र संशयनिर्णयौ पूर्ववदेव द्रष्टव्यौ, "प्राणबन्धनं हि सोम्य मनः प्राणस्य प्राणम्" इति चैवमादौ ब्रह्मविषयः प्राणशब्दो दृश्यते, वायुविकारे तु प्रसिद्धतरो लोकवेदयोरत इह प्राणशब्देन कतरस्योपादानं युक्तमिति भवतिसंशयः। किं पुन-

संहरति ॥ **तस्मादिति** ॥ २२ ॥ आकाशवाक्योक्तन्यायं तदुत्तरवाक्येऽतिदिशति ॥ **अत एव प्राणः** ॥ उद्गीथप्रकरणमिति ज्ञापनार्थमुद्गीथ इति भाष्यपदम् उद्गीथप्रकरणे श्रूयते इत्यन्वयः। कश्चिदृषिश्चाक्रायणः प्रस्तोतारमुवाच, हे प्रस्तोतः या देवता प्रस्तावं सामभक्तिमनुगताध्यानार्थं तां चेद्देवतामज्ञात्वा मम विदुषो निकटे प्रस्तोष्यसि मूर्धा ते पतिष्यतीति । ततो भीतः सन् पप्रच्छ कतमा सा देवतेति उत्तरम् ॥ **प्राण इति** ॥ प्राणमभिलक्ष्य सम्यक् विशन्ति लीयन्ते तमभिलक्ष्योज्जिहते उत्पद्यन्त इत्यर्थः । अतिदेशत्वात् पूर्ववत् संशयादि द्रष्टव्यमित्युक्तं विवृणोति ॥ **प्राणेति** ॥ मनउपाधिको जीवः, प्राणेन ब्रह्मणा बध्यते सुषुप्तावेकीभवति प्राणस्य वायोः प्राणं प्रेरकं तस्य सत्तास्फूर्तिप्रदमात्मानं ये विदुस्ते ब्रह्मविद इत्यर्थः। पूर्वेण गता-

रत्र युक्तं वायुविकारस्य पञ्चवृत्तेः प्राणस्योपादानं युक्तम्। तत्र हि प्रसिद्धतरः प्राणशब्द इत्यवोचाम। ननु पूर्ववदिहापि तल्लिङ्गात् ब्रह्मण एव ग्रहणं युक्तमिहापि हि वाक्यशेषे भूतानां संवेशनोद्गमनं पारमेश्वरं कर्म प्रतीयते। न, मुख्येऽपि प्राणे भूतसंवेशनोद्गमनस्य दर्शनात्। एवं ह्याम्नायते "यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते" इति। प्रत्यक्षञ्चैतत् स्वापकाले प्राणवृत्तावपरिलुप्यमानायामिन्द्रियवृत्तयः परिलुप्यन्ते, प्रबोधकाले च पुनः प्रादुर्भवन्तीति। इन्द्रियसारत्वाच्च भूतानामविरुद्धो मुख्ये प्राणेऽपि भूतसंवेशनोद्गमनवादी वाक्यशेषः। अपि चादित्योऽ-

र्थत्वात् पृथक्सूत्रं व्यर्थमिति शङ्कते ॥ **ननु पूर्ववदिति** ॥ अधिकाशङ्कानिरासार्थमातिदेशसूत्रमिति मत्वा शङ्कामाह ॥ **न मुख्येऽपीति** ॥ तर्हि तदा चक्षुरप्येतीति एवम्प्रकारेण सर्वत्र सम्बन्धः। नन्वत्रेन्द्रियाणां प्राणे लयोदयौ श्रूयेते तावता महाभूतलयादिप्रतिपादकवाक्यशेषोपपत्तिः कथमित्यत आह ॥ **इन्द्रियसारत्वादिति** ॥ "इत्यस्य ह्येष रसः," इति श्रुतेः इन्द्रियाणि लिङ्गात्मरूपाणि अपञ्चीकृतभूतानां साराणि तेषां लयाद्युक्त्या भूतानामपि प्राणे लयादिसिद्धेः वाक्यशेषोपपत्तिरित्यर्थः। अब्रह्मसहपाठाच्च प्राणो न ब्रह्मेत्याह ॥ **अपि**

ङ्गच्छेत। एष तु वा अतिवदतीति। सत्यं त्वेव वि-
जिज्ञासितव्यमिति च प्रयत्नान्तरकरणमर्थान्तर-
विवक्षां सूचयति। तस्माद्यथैकवेदप्रशंसायां प्र-
कृतायामेष तु महाब्राह्मणो यश्चतुरो वेदानधीत
इत्येकवेदेभ्योऽर्थान्तरभूतश्चतुर्वेदः प्रशस्यते ता-
दृगेतद् द्रष्टव्यम्। न च प्रश्नप्रतिवचनरूपयैवा-
र्थान्तरविवक्षया भवितव्यमिति नियमोऽस्ति,
प्रकृतसम्बन्धासम्भवकारितत्वादर्थान्तरविव-
क्षायाः। तत्र प्राणान्तमनुशासनं श्रुत्वा तूष्णीं-
भूतं नारदं स्वयमेव सनत्कुमारो व्युत्पादयति।
यत् प्राणविज्ञानेन विकारानृतविषयेणातिवा-
दित्वमनतिवादित्वमेव तदेष तु वा अतिवदति
यः सत्येनातिवदतीति। तत्र सत्यमिति परं ब्र-

तुशब्देनापि तद्बाध्यमाह ॥ प्रकृतेति ॥ विजिज्ञास्यत्वलिङ्गाच्च पू-
र्वोक्ताद्भिन्नमित्याह ॥ सत्यं त्वेवेति ॥ प्रकरणविच्छेदे दृष्टान्तमा-
ह ॥ तस्मादिति ॥ श्रुतिलिङ्गबलादेतत् सत्यं प्रकृतात् प्राणात् प्रा-
धान्येन भिन्नं द्रष्टव्यमित्यर्थः। एवमतिवादित्वस्य ब्रह्मसम्बन्धोक्त्या
प्राणलिङ्गत्वं निरस्तम्। यत्तु प्रश्नं विनोक्तत्वलिङ्गाद् भूमा प्राण इति
तन्न, तस्याप्रयोजकत्वादित्याह ॥ न चेति ॥ प्रश्नभेदादर्थभेद इति
न नियमः, एकस्यात्मनो मैत्रेय्या बहुशः पृष्टत्वात् प्रश्नं विनोक्तचा-
तुर्वेदस्य प्रकृतैकवेदाद्भिन्नत्वदर्शनाच्चेत्यर्थः। तत्र यथा चतुर्वेदत्वस्य
प्रकृतासम्बन्धादर्थभेदः, एवमिहापीति स्फुटयति ॥ तत्रेत्यादिना ॥
सत्यपदेन प्राणोक्तिरित्यत आह ॥ तत्र सत्यमिति ॥ विज्ञानं नि-

ह्मोच्यते परमार्थरूपत्वात् "सत्यं ज्ञानमनन्तं ब्रह्म" इति च श्रुत्यन्तरात्। तथा व्युत्पादिताय नारदाय "सोऽहं भगवः सत्येनातिवदानि" इत्येवं प्रवृत्ताय विज्ञानादिसाधनपरम्परया भूमानमुपदिशति । तत्र यत् प्राणादधिसत्यं वक्तव्यं प्रतिज्ञातं तदेवेह भूमेत्युच्यत इति गम्यते। तस्मादस्ति प्राणादधिभूम्न उपदेश इत्यतः प्राणादन्यः परमात्मा भूमा भवितुमर्हति। एवं चेहात्मविविदिषया प्रकरणस्योत्थानमुपपन्नं भविष्यति। प्राण एवेहात्मा विवक्षित इत्येतदपि नोपपद्यते । न हि प्राणस्य मुख्यया वृत्त्याऽऽत्मत्वमस्ति। न चान्यत्रपरमात्मज्ञानाच्छोकविनिवृत्तिरस्ति, "नान्यः पन्था विद्यतेऽयनाय"

दिध्यासनं, आदिपदान्मननश्रद्धाश्रवणमनःशुद्धिनिष्ठातद्धेतुकर्माणि गृह्यन्ते । इमान्यपि श्रवणादीनि ज्ञेयस्य सत्यस्य ब्रह्मत्वे लिङ्गानि। एवं श्रुतिलिङ्गैः प्राणस्यावान्तरप्रकरणं बाधित्वा प्रस्तुतं सत्यं ब्रह्म भूमपदोक्तबहुत्वधर्मीत्याह ॥ **तत्र यदिति**॥ किञ्च सन्निहितादपि व्यवहितं साकाङ्क्षं बलीय इति न्यायेन सन्निहितं निराकाङ्क्षं प्राणं दृष्ट्वा वाक्योपक्रमस्थ आत्मा स्वप्रतिपादनाय भूमवाक्यापेक्ष इह भूमा ग्राह्य इत्याह ॥ **एवं चेति**॥ किं च "शोकस्य परं पार"मित्युपक्रम्य तमसः पारमित्युपसंहारात् शोकस्य मूलोच्छेदं विना तरणायोगाच्च । शोकपदेन मूलतमो गृह्यते तन्निवर्तकज्ञानगम्यत्वलिङ्गात्, आत्मा ब्रह्मेत्याह ॥ **न चान्यत्रेति** ॥ ब्राह्मणमात्मायत्तत्त्वं प्राणस्य वदतीति सम्ब-

इति श्रुत्यन्तरात्। "तं मां भगवान् शोकस्य परं पारं तारयतु" इति चोपक्रम्योपसंहरति "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इति। तम इति शोकादिकारणमविद्योच्यते। प्राणान्ते चानुशासने न प्राणस्यान्यायत्ततोच्येत। आत्मनः प्राण इति च ब्राह्मणम्। प्रकरणान्ते च परमात्मविवक्षा भविष्यति, भूमा तु प्राण एवेति चेन्न। "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इत्यादिना भूम्न एवाप्रकरणसमाप्तेरनुकर्षात्। वैपुल्यात्मिका च भूमरूपता सर्वकारणत्वात् परमात्मनः सुतरामुपपद्यते॥ ८॥

## धर्मोपपत्तेश्च॥ ९॥

अपि च ये भूम्नि श्रूयन्ते धर्मास्ते परमात्मन्युपपद्यन्ते। यत्र "नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति दर्शनादिव्यवहाराभावं भूमन्यवगमयति परमात्मनि चायं द-

न्धः। नन्विदं चरमं ब्राह्मणं ब्रह्मपरमस्तु ततः प्रागुक्तो भूमा प्राण इति शङ्कते॥ **प्रकरणान्त** इति॥ तच्छब्देन भूमानुकर्षात् मैवमित्याह॥ **नेति**॥ ८॥ भूम्नो ब्रह्मत्वे लिङ्गान्तरमाह॥ **धर्मेति सूत्रम्**॥ यदुक्तं भूम्नो लक्षणं सुखत्वममृतत्वं च प्राणेषु योज्यमिति तदनूद्य

र्शनादिव्यवहाराभावोऽवगतः," यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदि"ति श्रुत्यन्तरात्। योऽप्यसौ सुषुप्त्यवस्थायां दर्शनादिव्यवहाराभाव उक्तः सोऽप्यात्मन एवासंङ्गत्वविवक्षया उक्तो न प्राणस्वभावविवक्षया, परमात्मप्रकरणात्। यदपि तस्यामवस्थायां सुखमुक्तं तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तम्। यत आह "एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति। इहापि "योवै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुख"मिति सामयसुखनिराकरणेन ब्रह्मैव सुखं भूमानं दर्शयति। "यो वै भूमा तदमृत"मिति अमृतत्वमपीह श्रूयमाणं परमकारणं गमयति, विकाराणाममृतत्वस्य आपेक्षिकत्वात्, "अतो-

विघटयति ॥ योऽप्यसावित्यादिना ॥ सति बुद्ध्याद्युपाधावात्मनो द्रष्टृत्वादिस्तदभावे सुषुप्तौ तदभाव इत्यसङ्गत्वज्ञानार्थं प्रश्नोपनिषदि न शृणोति न पश्यतीति परमात्मानं प्रकृत्योक्तम्। तथा तत्रैवात्मनः सुखत्वमुक्तं न प्राणस्य। यतः श्रुत्यन्तरम् आत्मन एव सुखत्वमाह तस्मादित्यर्थः। आमयो नाशादिदोषः तत् सहितं सामयम् आर्तं नश्वरम्। स एवाधस्तात् स उपरिष्टादिति सर्वगतत्वं, स एवेदं सर्वमिति सर्वात्मत्वं च श्रुतं, तस्माद्भूमाध्यायो निर्गुणे समन्वित इति सिद्धम् ॥ ९ ॥

---

१ बुद्ध्याद्युपाध्यभावे। २ आत्मनोद्रष्टृत्वाभावः।

ऽन्यदार्त”मिति च श्रुत्यन्तरात्। तथा च सत्यत्वं स्वमहिमप्रतिष्ठितत्वं सर्वगतत्वं सर्वात्मत्वमिति चैते धर्माः श्रूयमाणाः परमात्मन्येवोपपद्यन्ते नान्यत्र तस्माद्भूमा परमात्मेति सिद्धम्॥९॥

## अक्षरमम्बरान्तधृतेः॥ १० ॥

“कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वि”त्यादि श्रूयते । तत्र संशयः। किमक्षरशब्देन वर्ण उच्यते किं वा पर एवेश्वर इति । तत्राक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात् प्रसिद्धव्यतिक्रमस्य

॥ अक्षरमम्बरान्तधृतेः। बृहदारण्यकं पठति ॥ कस्मिन्निति ॥ यद्भूतं भवच्च भविष्यच्च तत्सर्वं कस्मिन्नोतमिति गार्ग्या पृष्टेन मुनिना याज्ञवल्क्येनाव्याकृताकाशः कार्यमात्राश्रय उक्तः। आकाशः कस्मिन्नोत इति द्वितीयप्रश्ने स मुनिरुवाच । तत् अव्याकृतस्याधिकरणमेतदक्षरम् अस्थूलादिरूपमित्यर्थः । उभयत्राक्षरशब्दप्रयोगात् संशयः। यथा सत्यशब्दो ब्रह्मणि रूढ इति ब्रह्म भूमेत्युक्तं तथाक्षरशब्दो वर्णे रूढ इति दृष्टान्तेन पूर्वपक्षः, तत्रोङ्कारोपास्तिः फलम् । सिद्धान्ते निर्गुणब्रह्मधीरिति विवेकः। ननु न क्षरतीत्यचलत्वानाशित्वयोगाद् ब्रह्मण्यप्यक्षरशब्दो मुख्य इत्यत आह ॥ प्रसिद्धिव्यतिक्रमस्येति ॥ रूढिर्योगमपहरतीति न्यायादित्यर्थः। वर्णस्योङ्कारस्य सर्वाश्रयत्वं क-

---

१ वर्णे परमात्मनि चेत्यर्थः। २ पूर्वपक्षे।

चायुक्तत्वात्, ॐकार एवेदं सर्वमित्यादौ च श्रु-
त्यन्तरे वर्णस्याप्युपास्यत्वेन सर्वात्मकत्वाव-
धारणात् वर्ण एवाक्षरशब्द इति, एवं प्राप्ते उ-
च्यते। पर एवात्माक्षरशब्दवाच्यः, कस्मादम्ब-
रान्तधृतेः पृथिव्यादेराकाशान्तस्य विकारजा-
तस्य धारणात्। तत्र हि पृथिव्यादेः समस्त-
स्य विकारजातस्य कालत्रयविभक्तस्याकाश
एव तदोतं च प्रोतं चेत्याकाशे प्रतिष्ठितत्वमुक्त्वा
कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेत्यनेन प्र-
श्नेनेदमक्षरमवतारितं, तथा चोपसंहृतमेतस्मि-
न्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति।
न चेयमम्बरान्तधृतिर्ब्रह्मणोऽन्यत्र सम्भवति।
यदप्योङ्कार एवेदं सर्वमिति तदपि ब्रह्मप्रतिप-
त्तिसाधनत्वात् स्तुत्यर्थं द्रष्टव्यम्। तस्मान्न क्ष-
रत्यश्नुते चेति नित्यत्वव्यापित्वाभ्यामक्षरं पर-
मेव ब्रह्म॥ १०॥ स्यादेतत्। कार्यस्य चेत् का-
रणाधीनत्वमम्बरान्तधृतिरभ्युपगम्यते प्रधान-
कारणवादिनोऽपीयमुपपद्यते, कथं अम्बरान्तधृ-

थमित्याशङ्क्य ध्यानार्थमिदं यथा श्रुत्यन्तरे सर्वात्मत्वमित्याह॥ ॐ-
कारइति॥ प्रश्नप्रतिवचनाभ्यां आकाशान्तजगदाधारत्वे तात्पर्यनि-
श्चयान्न ध्यानार्थता, अतस्तल्लिङ्गबलाद्रूढिं बाधित्वा योगवृत्तिर्ग्राह्येति
सिद्धान्तयति॥ एवमित्यादिना॥ १०॥ अकाशं भूतं कृत्वा शङ्कते।

तेर्ब्रह्मत्वप्रतिपत्तिरिति, अत उत्तरं पठति॥

## सा च प्रशासनात्॥ ११॥

सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म, कस्मात्? प्रशासनात्। प्रशासनं हीह श्रूयते "एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादि। प्रशासनं च पारमेश्वरं कर्म नाचेतनस्य प्रशासनं सम्भवति। न ह्यचेतनानां घटादिकारणानां मृदादीनां घटादिविषयं प्रशासनमस्ति॥ ११॥

## अन्यभावव्यावृत्तेश्च॥ १२॥

अन्यभावव्यावृत्तेश्च कारणात् ब्रह्मैवाक्षरशब्दवाच्यं, तस्यैवाम्बरान्तधृतिः कर्म नान्यस्य कस्यचित्। किमिदमन्यभावव्यावृतेरिति। अन्यस्य भावोऽन्यभावस्तस्माद्व्यावृत्तिरन्यभाव-

स्यादेतदिति। चेतनकर्तृकशिक्षाया अत्र श्रुतेर्मैवमित्याह॥ सा चेति॥ सूत्रं व्याचष्टे॥ सा चेति॥ चकार आकाशस्य भूतत्वनिरासार्थः। भूताकाशस्य कार्यान्तःपातिना श्रुतसर्वकार्याश्रयत्वायोगात् अव्याकृतमज्ञानमेवाकाशः प्रधानशब्दित इति तदाश्रयत्वाच्चाक्षरं न प्रधानमित्यर्थः। विधृतौ विषयत्वेन धृतौ॥ ११॥

प्रश्नपूर्वकं सूत्रं व्याकरोति॥ किमिदमिति॥ घटत्वात् व्यावृत्तिरिति भ्रान्तिं निरस्यति॥एतदिति॥ अम्बरान्तस्याधारमक्षरं श्रु-

व्यावृत्तिरिति। एतदुक्तं भवति, यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाशङ्क्यते तद्भावादिदमम्बरान्तविधारणमक्षरं व्यावर्तयति श्रुतिः, "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ" इति। तत्रादृष्टत्वादिव्यपदेशः प्रधानस्यापि सम्भवति, द्रष्टृत्वादिव्यपदेशस्तु न तस्य सम्भवत्यचेतनत्वात्, तथा "नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ" इत्यात्मभेदप्रतिषेधात् न शारीरस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वं, "अचक्षुष्कमश्रोत्रमवागमन" इति चोपाधिमत्ताप्रतिषेधात्। न हि निरुपाधिकः शारीरो नाम भवति। तस्मात् परमेव ब्रह्माक्षरमिति निश्चयः॥ १२॥

## ईक्षतिकर्मव्यपदेशात् सः॥ १३॥

"एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्का-

तिरचेतनत्वाद्व्यावर्तयतीत्यर्थः। जीवनिरासपरत्वेनापि सूत्रं योजयति॥ **तथेति**॥ अन्यभावो भेदः तन्निषेधादिति सूत्रार्थः। तर्हि शोधितो जीव एवाक्षरं न पर इत्यत आह॥ **न हीति**॥ शोधिते जीवत्वं नास्तीत्यर्थः। तस्माद्गार्गि[1]ब्राह्मणं निर्गुणाक्षरे समन्वितमिति सिद्धम्॥ १२॥

१ गार्गीशब्दस्य 'ङ्यापोःसंज्ञाछन्दसोर्बहुलमि' ति ह्रस्वो बोध्यः।

रस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेती''ति प्रकृत्य श्रूयते "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीते" ति। किमस्मिन् वाक्ये परं ब्रह्माभिध्यातव्यमुपदिश्यते आहोस्विदपरमि "त्येतेनैवायतनेन परमपरं चैकतरमन्वेती" ति प्रकृतत्वात् संशयः। तत्रापरमि-

ईक्षतिकर्मव्यपदेशात् सः॥ प्रश्नोपनिषदमुदाहरति ॥ एतदिति॥ पिप्पलादो गुरुः सत्यकामेन पृष्टो ब्रूते, हे सत्यकाम परं निर्गुणमपरं सगुणं त्वब्रह्मैतदेव योऽयमोङ्कारः, स हि प्रतिमेव विष्णोस्तस्य प्रतीकस्तस्मात् प्रणवं ब्रह्मात्मना विद्वानेतेनैवोङ्कारध्यानेनायतनेन प्राप्तिसाधनेन यथाध्यानं परमपरं चान्वेति प्राप्नोतीति प्रकृत्य मध्ये-एकमात्रद्विमात्रोङ्कारयोर्ध्यानमुक्त्वा ब्रवीति ॥ यः पुनरिति ॥ इत्थम्भावे तृतीया ब्रह्मोङ्कारयोरभेदोपक्रमात् । यो ह्यकारादिमात्रात्रये एकस्या मात्राया अकारस्य ऋग्याादिकं जाग्रदादिविभूतिं च जानाति तेन सम्यक् ज्ञाता एकमात्रा यस्योङ्कारस्य स एकमात्रः। एवं मात्राद्वयस्य सम्यग्विभूतिज्ञाने द्विमात्रस्तथा त्रिमात्रः। तमोङ्कारं पुरुषं योऽभिध्यायीत स ॐकारविभूतित्वेन ध्यातैः सामभिः सूर्यद्वारा ब्रह्मलोकं गत्वा परमात्मानं पुरुषं ईक्षत इत्यर्थः। संशयं तद्बीजं चाह ॥ किमित्यादिना । अस्मिन् त्रिमात्रवाक्य इत्यर्थः। पूर्वत्र पूर्वपक्षत्वेनोक्त ॐकारे बुद्धिस्थं ध्यातव्यं निश्चीयत इति प्रसङ्गसङ्गतिः। यद्वा पूर्वत्र वर्णे रूढस्याक्षरशब्दस्य लिङ्गात् ब्रह्मणि वृत्तिरुक्ता तद्वदत्रापि ब्रह्मलोकप्राप्तिलिङ्गात् परशब्दस्य हिरण्यगर्भे वृत्तिरिति

१ त्रिमात्रेणेतितृतीया। २ प्रश्नोपनिषदि पंचमप्रश्न एतद्वै तत्सत्यकामपरंचापरं च-ब्रह्मपदोंकार इत्येवमभेदोपक्रम इति ध्येयम्।

दं ब्रह्मेति प्राप्तं, कस्मात्? "स तेजसि सूर्ये सम्पन्नः, स सामभिरुन्नीयते ब्रह्मलोक" मिति च तद्विदो देशपरिच्छिन्नस्य फलस्योच्यमानत्वात्। न हि परब्रह्मविद्देशपरिच्छिन्नं फलमश्नुवीतेति युक्तं, सर्वगतत्वात् परस्य ब्रह्मणः। नन्वपरब्रह्मपरिग्रहे परं पुरुषमिति विशेषणं नोपपद्यते, नैष दोषः, पिण्डापेक्षया प्राणस्य परत्वोपपत्तेः, इत्येवं प्राप्तेऽभिधीयते। परमेव ब्रह्मेहाभिध्यातव्यमुपदिश्यते, कस्मात्? 'ईक्षतिकर्मव्यपदेशात्'। ईक्षतिर्दर्शनं दर्शनव्याप्यमीक्षतिकर्म, ईक्षतिकर्मत्वेनास्याभिध्यातव्यस्य पुरुषस्य वा-

दृष्टान्तेन पूर्वपक्षयति ॥ तत्रापरमिति। कार्यपरब्रह्मणोरुपास्तिरुभयत्र फलम्। स उपासकः। सूर्ये सम्पन्नः प्रविष्टः । ननु वसुदान ईश्वर इति ध्यानात् विन्दते वस्वित्यल्पमपि फलं ब्रह्मोपासकस्य श्रुतमित्यत आह ॥ नहीति ॥ अन्यत्र तथात्वेऽपि अत्र परवित् परमपरविदपरमन्वेतीत्युपक्रमात् परविदोऽपरप्राप्तिरयुक्ता उपक्रमविरोधात् । न चात्र परप्राप्तिरेवोक्तेति वाच्यं, परस्य सर्वगतत्वात् । अत्रैव प्राप्तिसम्भवेन सूर्यद्वारा गतिवैयर्थ्यात् । तस्मात् उपक्रमानुगृहीतादपरप्राप्तिरूपाल्लिङ्गात् परं पुरुषमिति परश्रुतिर्बाध्येत्यर्थः । परश्रुतेर्गतिं पृच्छति॥ नन्विति ॥ पिण्डः स्थूलो विराट् तदपेक्षया सूत्रस्य परत्वमिति समाध्यर्थः सूत्रे सशब्द ईश्वरपर इति प्रतिज्ञातत्वेन तं व्याचष्टे ॥ परमेवेति ॥ स उपासक एतस्माद्धिरण्यग-

१ कार्यब्रह्मणो हिरण्यगर्भस्योपास्तिः पूर्वपक्षे फलं परब्रह्मण उपास्तिः सिद्धान्ते फलमितिविवेकः।

क्यशेषे व्यपदेशो भवति, "स एतस्माज्जीवघनात् परात् परं पुरुषं पुरिशयं ईक्षत" इति। तत्राभिध्यायतेरतथाभूतमपि वस्तु कर्म भवति. मनोरथकल्पितस्यापि अभिध्यायतिकर्मत्वात्। ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टमित्यतः परमात्मैवायं सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते। स एव चेह परपुरुषशब्दाभ्यामभिध्यातव्यः प्रत्यभिज्ञायते। नन्वभिध्याने पर पुरुष उक्त ईक्षणे तु परात्परः कथमितर इतरत्र प्रत्यभिज्ञायते इति, अत्रोच्यते। परपुरुषशब्दौ तावदुभयत्र साधारणौ। न चात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः

भात् परं पुरुषं ब्रह्माहमितीक्षत इत्यर्थः । नन्वीक्षणविषयोऽप्यपरोऽस्तु तत्राह ॥ तत्राभिध्यायतेरिति ॥ नन्वीक्षणं प्रमात्वाद्विषयसत्यतामपेक्षत इति भवतु सत्यः पर ईक्षणीयः, ध्यातव्यस्त्वसत्योऽपरः किं न स्यादित्यत आह ॥ स एवेति ॥ श्रुतिभ्यां प्रत्यभिज्ञानात् स एवायमिति सौत्रः सशब्दो व्याख्यातः। अत्रैवं सूत्रयोजना, ओँकारे यो ध्येयः स पर एवात्मा वाक्यशेषे ईक्षणीयत्वोक्तेः, अत्र च श्रुतिप्रत्यभिज्ञानात् स एवायमिति । ननु शब्दभेदात् न प्रत्यभिज्ञेति शङ्कते ॥ न न्विति ॥ परात् पर इति शब्दभेदं अङ्गीकृत्य श्रुतिभ्यामुक्तप्रत्यभिज्ञाया अविरोधमाह ॥ अत्रेति ॥ नन्वेतस्माज्जीवघनात् परादित्येतत्पदेनोपक्रान्तध्यातव्यपरामर्शादीक्षणीयः परात्मा ध्येयादन्य इत्यत आह ॥ न चात्रेति ॥ ध्यानस्य तत्फलेक्षणस्य च लो-

परः पुरुषः परामृश्यते येन तस्मात् परात्परोऽयमीक्षितव्यः पुरुषोऽन्यः स्यात् । कस्तर्हि, जीवघन इत्युच्यते। घनो मूर्तिर्जीवलक्षणो घनो जीवघनः सैन्धवखिल्यवत् यः परमात्मनो जीवरूपः खिल्यभाव उपाधिकृतः परश्च विषयेन्द्रियेभ्यः सोऽत्र जीवघन इति। अपर आह "स सामभिरुन्नीयते ब्रह्मलोकमि"ति अतीतानन्तरवाक्यनिर्दिष्टो यो ब्रह्मलोकः परश्च लोकान्तरेभ्यः सोऽत्र जीवघन इत्युच्यते। जीवानां हि सर्वेषां करणपरिवृतानां सर्वकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि सङ्घातोपपत्तेर्भवति ब्रह्मलोको जीवघनः, तस्मात् परो यः परमात्मेक्षणकर्मभूतः स एवाभिध्यानेऽपि कर्मभू-

के समानविषयत्वाद्ध्येय एवेक्षणीयः। एवं चोपक्रमोपसंहारयोरेकवाक्यता भवतीति भावः।"स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनादि"त्येतत्पदेन सन्निहिततरो ब्रह्मलोकस्वामी परामृश्यत इति प्रश्नपूर्वकं व्याचष्टे ॥ कस्तर्हीत्यादिना ॥ 'मूर्तौ घनः' ( ३।३।७७ ) इति सूत्रादिति भावः । सैन्धवखिल्यो लवणपिण्डः खिल्यवदल्पो भावः परिच्छेदो यस्य स खिल्यभावः। एतत्पदेन ब्रह्मलोको वा परामृश्यते इत्याह ॥ अपर इति ॥ जीवघनशब्दस्य ब्रह्मलोके लक्षणां दर्शयति। जीवानां हीति ॥ व्यष्टिकरणाभिमानिनां जीवानां घनः सङ्घातो यस्मिन् सर्वकरणाभिमानिनि स जीवघनः तत्स्वामिकत्वात् परम्परासम्बन्धेन लोको लक्ष्य इत्यर्थः । तस्मात् परः सर्वलो-

त इति गम्यते। परं पुरुषमिति च विशेषणं परमात्मपरिग्रह एवावकल्पते। परो हि पुरुषः परमात्मैव भवति यस्मात् परं किंचिदन्यन्नास्ति, "पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिरि"ति च श्रुत्यन्तरात्। परं चापरं च ब्रह्म यदोङ्कार इति च विभज्यानन्तरमोङ्कारेण परं पुरुषमभिध्यातव्यं ब्रुवन् परमेव ब्रह्म परं पुरुषं गमयति। "यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्त" इति पाप्मविनिर्मोकफलवचनं परमात्मानमिहाभिध्यातव्यं सूचयति। अत्र यदुक्तं परमात्माभिध्यायिनो न देशपरिच्छिन्नं फलं युज्यत इति, अत्रोच्यते। त्रिमात्रेणोङ्कारेणालम्बनेन परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः क्रमेण च सम्यग्दर्शनोत्प-

कातीतः शुद्ध इत्यर्थः। परपुरुषशब्दस्य परमात्मनि मुख्यत्वाच्च स एव ध्येय इत्याह ॥ **परमिति** ॥ यस्मात् परं नापरमस्ति किंचित् स एव मुख्यः परः न तु पिण्डात् परः सूत्रात्मेत्यर्थः। किंच परशब्देनोपक्रमे निश्चितं ब्रह्मैवात्र वाक्यशेषे ध्यातव्यमित्याह॥**परं चापरं चेति**॥ पापनिवृत्तिलिङ्गाच्चेत्याह ॥ **यथेति** ॥ पादोदरः सर्पः। ॐकारे परब्रह्मोपासनया सूर्यद्वारा ब्रह्मलोकं गत्वा परब्रह्मेक्षित्वा तदेव शान्तमभयं प्राप्नोतीत्यविरोधमाह ॥ **अत्रोच्यत इति** ॥ एवमेकवाक्यतासमर्थनप्रकरणानुगृहीतपरपुरुषश्रुतिभ्यां परब्रह्मप्रत्यभिज्ञया ब्रह्म-

त्तिरिति क्रममुक्त्यभिप्रायमेतद्भविष्यतीत्यदोषः १३

## दहर उत्तरेभ्यः ॥ १४ ॥

"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं, तद्वाव विजिज्ञासितव्यम्" इत्यादि वाक्यं समाम्नायते। तत्र योऽयं दहरे हृदयपुण्डरीके दहर आकाशः श्रुतः स किम्भूताकाशोऽथ विज्ञानात्माथ वा परमात्मेति संशय्यते। कुतः संशयः, आकाशब्रह्मपुरशब्दाभ्याम्, आकाशशब्दो ह्ययं भूताकाशे परस्मिंश्च ब्रह्मणि प्रयुज्यमानो दृश्यते। तत्र किम्भूताकाश एव दहरः स्यात् किं वा पर इति संशयः। तथा ब्रह्मपुरमिति किं जीवोऽत्र ब्रह्मनामा तस्येदं

लोकप्राप्तिलिङ्गं बाधित्वा वाक्यं प्रणवध्येये ब्रह्मणि समन्वितमिति सिद्धम् ॥ १३ ॥

॥ दहर उत्तरेभ्यः । छान्दोग्यमुदाहरति ॥ अथेति ॥ भूमविद्यानन्तरं दहरविद्याप्रारम्भार्थोऽथशब्दः । ब्रह्मणोऽभिव्यक्तिस्थानत्वात् ब्रह्मपुरं शरीरं अस्मिन् यत् प्रसिद्धं दहरमल्पं हृत्पद्मं तस्मिन् हृदये यदन्तराकाशशब्दितं ब्रह्म तदन्वेष्टव्यं विचार्य ज्ञेयमित्यर्थः । अत्राकाशो जिज्ञास्यस्तदन्तःस्थं वेति प्रथमं संशयः कल्प्यः । तत्र यद्याकाशस्तदा संशयद्वयम् । तत्राकाशशब्दादेकं संशयमुक्त्वा ब्रह्मपुरशब्दात् संशयान्तरमाह ॥ तथा ब्रह्मपुरमितीति ॥ अत्र शब्दे जी-

पुरं शरीरं ब्रह्मपुरमथ वा परस्यैव ब्रह्मणः पुरं ब्रह्मपुरमिति। तत्र जीवस्य परस्य वान्यतरस्य पुरस्वामिनो दहराकाशत्वे संशयः। तत्राकाशशब्दस्य भूताकाशे रूढत्वाद्भूताकाश एव दहरशब्द इति प्राप्तं,तस्य च दहरायतनापेक्षया दहरत्वं, "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इति च बाह्याभ्यन्तरभावकृतभेदस्योपमानोपमेयभावो द्यावापृथिव्यादि च तस्मिन्नन्तःसमाहितमवकाशात्मनाकाशस्यैक-

वस्य ब्रह्मणो वा पुरमिति संशयः। तत्र तस्मिन् संशये सतीति योजना। परपुरुपशब्दस्य ब्रह्मणि मुख्यत्वात् ब्रह्म ध्येयमित्युक्तं। तथेहाप्याकाशपदस्य भूताकाशे रूढत्वाद्भूताकाशो ध्येय इति दृष्टान्तेन पूर्वपक्षयति ॥ **तत्राकाशेत्यादिना** ॥ दहरवाक्यस्यानन्तरं प्रजापतिवाक्यस्य च सगुणे निर्गुणे च समन्वयोक्तः श्रुत्यादिसङ्गतयः। पूर्वपक्षे भूताकाशाद्युपास्तिः सिद्धान्ते सगुणब्रह्मोपास्त्या निर्गुणधीरिति फलभेदः। न चा"काशस्तल्लिङ्गादि"त्यनेनास्य पुनरुक्तता शङ्कनीया। अत्र तस्मिन् यदन्तस्तदन्वेष्टव्यमित्याकाशान्तस्थस्यान्वेष्टव्यत्वादिलिङ्गान्वयेन दहराकाशस्य ब्रह्मत्वे स्पष्टलिङ्गाभावात्। ननु भूताकाशस्याल्पत्वं कथमेकस्योपमानत्वम् उपमेयत्वं च कथं "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्चे"त्यादिना श्रुतसर्वाश्रयत्वं च कथमित्याशङ्क्य क्रमेण परिहरति ॥ **तस्येत्यादिना** ॥ हृदयापेक्षया अल्पत्वं ध्यानार्थं कल्पितभेदात् सादृश्यं, स्वत एकत्वात् सर्वाश्रयत्वमित्यर्थः। नन्वे"ष आत्मे"त्यात्मशब्दो भूते

त्वात्। अथ वा जीवो दहर इति प्राप्तं ब्रह्मपुरशब्दात्, जीवस्य हीदं पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते। तस्य स्वकर्मणोपार्जितत्वात्। भक्त्या च तस्य ब्रह्मशब्दवाच्यत्वम्। न हि परस्य ब्रह्मणः शरीरेण स्वस्वामिभावः सम्बन्धोऽस्ति। तत्र पुरस्वामिनः पुरैकदेशेऽवस्थानं दृष्टं यथा राज्ञः, मनउपाधिकश्च जीवो मनश्च प्रायेण हृदये प्रतिष्ठितमित्यतो जीवस्यैवेदं हृदयान्तरवस्थानं स्यात्। दहरत्वमपि तस्यैवाराग्रोपमितत्वादवकल्पते। आकाशोपमितत्वादि च ब्रह्माभेदविवक्षया भविष्यति। न चात्र दह-

न युक्त इत्यरुचेराह ॥ अथ वेति ॥ भक्त्येति चैतन्यगुणयोगेनेत्यर्थः। मुख्यं ब्रह्म गृह्यतामित्यत आह ॥ न हीति ॥ अस्तु पुरस्वामी जीवो हृदयस्थाकाशस्तु ब्रह्मेत्यत आह ॥ तत्रेति ॥ पुरस्वामिन एव तदन्तःस्थत्वसम्भवात् नान्यापेक्षेत्यर्थः। व्यापिनोऽन्तःस्थत्वं कथमित्यत आह ॥ मन इति ॥ आकाशपदेन दहरमनुकृष्योक्तोपमादिकं ब्रह्माभेदविवक्षया भविष्यतीत्याह ॥ आकाशेति ॥ ननु जीवस्याकाशपदार्थत्वमयुक्तमित्याशङ्क्य तर्हि भूताकाश एव दहरोस्तु तस्मिन्नन्तःस्थं किंचिद्ध्येयमिति पक्षान्तरमाह ॥ न चात्रेति ॥ परमन्तःस्थं वस्तु, तद्विशेषणत्वेनाधारत्वेन दहराकाशस्य तच्छब्देनोपादानादित्यर्थः। यद्वा अन्वेष्यत्वादिलिङ्गात् दहरस्यब्रह्मत्वनिश्चयादा"काशस्तल्लिङ्गा"दित्यनेन गतार्थत्वमिति शङ्कात्र निरसनीया, अन्वेष्य-

१ आकाशपदस्य भूताकाशमात्र रूढत्वादिति शेषः।

रस्याकाशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च श्रूयते, तस्मिन् यदन्तरिति परविशेषणत्वेनोपादानादिति, अत उत्तरं ब्रूमः। परमेश्वर एव दहराकाशो भवितुमर्हति, न भूताकाशो जीवो वा। कस्मादुत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः। तथा हि अन्वेष्टव्यतया अभिहितस्य दहराकाशस्य "तं चेद्ब्रूयुरि"त्युपक्रम्य "किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्" इत्येवमाक्षेपपूर्वकं प्रतिसमाधानवचनं भवति "स ब्रूयाद् यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते" इत्यादि। तत्र पुण्डरीकदहरत्वेन प्राप्तदहरत्वस्याकाशस्य प्रसिद्धाकाशौपम्येन दहरत्वं निवर्तयन् भूताकाशत्वं दहरस्याकाशस्य निवर्तयतीति गम्यते। यद्यप्या-

त्वादेः परविशेषणत्वेन ग्रहणात् दहरस्य ब्रह्मत्वे लिङ्गं नास्तीत्यर्थः। अपहतपाप्मत्वादिलिङ्गोपेतात्मश्रुत्या केवलाकाशश्रुतिर्बाध्येति सिद्धान्तयति॥ **परमेश्वर** इत्यादिना॥ आकाशस्याक्षेपपूर्वकमिति सम्बन्धः। तमाचार्यं प्रति यदि ब्रूयुः हृदयमेव तावदल्पं तत्रत्याकाशोऽल्पतरः, किं तदत्राल्पे विद्यते, यद्विचार्य ज्ञेयमिति, तदा स आचार्यो ब्रूयादाकाशस्याल्पतानिवृत्तिमित्यर्थः। वाक्यस्य तात्पर्यमाह॥ **तत्रेति**॥ निवर्तयति आचार्य इति शेषः। नन्वाकाशशब्देन रूढ्या भूताकाशस्य भा-

काशशब्दो भूताकाशे रूढस्तथापि तेनैव तस्योपमा नोपपद्यत इति भूताकाशशङ्का निवर्तिता भवति। नन्वेकस्याप्याकाशस्य बाह्याभ्यन्तरत्वकल्पितेन भेदेनोपमानोपमेयभावः सम्भवतीत्युक्तम्। नैवं सम्भवति। अगतिका हीयं गतिर्यत् काल्पनिकभेदाश्रयणम्। अपि च कल्पयित्वा भेदमुपमानोपमेयभावं वर्णयतः परिच्छिन्नत्वादभ्यन्तराकाशस्य न बाह्याकाशपरिमाणत्वमुपपद्येत। ननु परमेश्वरस्यापि "ज्यायानाकाशादि"ति श्रुत्यन्तरान्नैवाकाशपरिमाणत्वमुपपद्येत, नैष दोषः, पुण्ड-

नात् कथं तन्निवृत्तिरित्याशङ्क्याह॥ **यद्यपीति**॥ ननु "रामरावणयोर्युद्धं रामरावणयोरिवे"त्यभेदेऽप्युपमा दृष्टेति चेत्, न, अभेदे सादृश्यस्यानन्वयेन युद्धस्य निरुपमत्वे तात्पर्यात् अयमनन्वयालङ्कार इति काव्यविदः। पूर्वोक्तमनूद्य निरस्यति॥ **नन्वित्यादिना**॥ "सीताश्लिष्ट इवाभाति कोदण्डप्रभया युत" इत्यादौ प्रभायोगसीताश्लेषरूपविशेषणभेदाद् भेदाश्रयणमेकस्यैव श्रीरामस्योपमानोपमेयभावसिद्ध्यर्थमगत्या कृतमित्यनुदाहरणं द्रष्टव्यं नैवमत्राश्रयणं युक्तं वाक्यस्याल्पत्वनिवृत्तिपरत्वेन गतिसद्भावात्। किंच हार्दाकाशस्यान्तरत्वात्यागे अल्पत्वेन व्यापकबाह्याकाशसादृश्यं न युक्तमित्याह॥ **अपि चेति**॥ आन्तरत्वत्यागे तु अत्यन्ताभेदान्न सादृश्यमितिभावः। ननु हार्दाकाशस्याल्पत्वनिवृत्तौ तावत्त्वे च तात्पर्यं किं न स्यादि

१ आकाशपरिमाणत्वे च।

रीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरत्वाद्वाक्यस्य, न तावत्त्वप्रतिपादनपरत्वम्। उभयप्रतिपादने हि वाक्यं भिद्येत। न च कल्पितभेदे पुण्डरीकवेष्टिते आकाशैकदेशे द्यावापृथिव्यादीनामन्तः समाधानमुपपद्यते। "एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प" इति चात्मत्वापहतपाप्मत्वादयश्च गुणा न भूताकाशे सम्भवन्ति। यद्यप्यात्मशब्दो जीवे सम्भवति तथापीतरेभ्यः कारणेभ्यो जीवाशङ्कापि निवर्तिता भवति। नह्युपाधिपरिच्छिन्नस्याराग्रोपमितस्य जीवस्य पुण्डरीकवेष्टनकृतं दहरत्वं शक्यं निवर्तयितुं ब्रह्माभेदविवक्षया जीवस्य सर्वगतत्वादि विवक्ष्यत इति चेत्। यदात्मतया जीवस्य सर्वगत्वादि विवक्ष्येत तस्यैव ब्रह्मणः साक्षात् सर्वगतत्वादि विवक्ष्यतामिति युक्तम्। यदप्युक्तं ब्रह्मपुरमिति जीवेन पुरस्योपलक्षितत्वाद्राज्ञ इव जीवस्यैवेदं

त्यत आह ॥ उभयेति ॥ अतोऽल्पत्वनिवृत्तावेव तात्पर्यमिति भावः। एवमाकाशोपमितत्वाद्दहराकाशो न भूतमित्युक्त्व सर्वाश्रयत्वादिलिङ्गेभ्यश्च तथेत्याह ॥ न चेत्यादिना। विगता जिघत्सा जग्धुमिच्छा यस्य सोऽयं विजिघत्सः बुभूक्षाशून्य इत्यर्थः। प्रथमश्रुतब्रह्मशब्देन तत्सापेक्षचरमश्रुतषष्ठीविभक्त्यर्थः सम्बन्धो नेयः न

**पुरस्वामिनः पुरैकदेशवर्तित्वमस्त्वित्यत्र ब्रूमः। परस्यैवेदं ब्रह्मणः पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते ब्रह्मशब्दस्य तस्मिन् मुख्यत्वात्। तस्याप्यस्ति पुरेणानेन सम्बन्ध उपलब्ध्यधिष्ठानत्वात्। "स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते," "सवा अयं पुरुषः सर्वासु पूर्षु पुरिशय" इत्यादिश्रुतिभ्यः। अथ वा जीवपुरे एवास्मिन् ब्रह्म सन्निहितमुपलक्ष्यते। यथा शालग्रामे विष्णुः सन्निहित इति तद्वत्। "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति च कर्मणामन्त-**

तु ब्रह्मणः पुरमिति षष्ठ्यर्थः स्वस्वामिभावो ग्राह्यः। निरपेक्षेण तत्सापेक्षं बाध्यमिति न्यायादित्याह॥ अत्र ब्रूम इति॥ शरीरस्य ब्रह्मणा तदुपलब्धिस्थानत्वरूपे सम्बन्धे मानमाह ॥ स इति ॥ पूर्षु शरीरेषु, पुरि हृदये शय इति पुरुष इत्यन्वयः। ननु ब्रह्मशब्दस्य जीवेऽप्यन्नादिना शरीरवृद्धिहेतौ मुख्यत्वान्न षष्ठ्यर्थः कथं चिन्त्येय इत्यत आह॥ अथ वेति॥ बृहयति देहमिति ब्रह्म जीवः तत्स्वामिके पुरे, हृदयं ब्रह्मवेश्म भवतु राजपुरे मैत्रसद्मवदित्यर्थः। अनन्तफललिङ्गादपि दहरः परमात्मेत्याह॥ तद्यथेति॥ अथ कर्मफलाद्वैराग्यानन्तरमिह जीवद्दशायामात्मानं दहरं तदाश्रितांश्च सत्यकामादिगुणान् आचार्योपदेशमनुविद्य ध्यानेनानुभूय ये परलोकं गच्छन्ति तेषां सर्वलोकेष्वनन्तमैश्वर्यं स्वेच्छया संचलनादिकं भवतीत्यर्थः। दहरे उक्तलिङ्गान्यन्यथासिद्धानि तेषां तदन्तःस्थगुणत्वादित्युक्तं स्मारयि-

वत्फलत्वमुक्त्वा "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवती"ति प्रकृतदहराकाशविज्ञानस्यानन्तफलत्वं वदन् परात्मत्वमस्य सूचयति। यदप्येतदुक्तं न दहरस्याकाशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च श्रुतं परविशेषणत्वेनोपादानादित्यत्र ब्रूमः। यद्याकाशो नान्वेष्टव्यत्वेनोक्तः स्यात् "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इत्याद्याकाशस्वरूपप्रदर्शनं नोपयुज्येत। नन्वेतदप्यन्तर्वर्तिवस्तुसद्भावदर्शनायैव प्रदर्श्यते "तं चेद् ब्रूयुः, यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमि"त्याक्षिप्य परिहारावसरे आकाशोपम्योपक्रमेण द्यावापृथिव्यादीनामन्तःसमाहितत्वदर्शनात्। नैतदेवम्। एवं हि सति यदन्तः

त्वा दूषयति॥ **यदपीत्यादिना** ॥ उत्तरत्राकाशस्य स्वरूपप्रतिपादनान्यथानुपपत्त्या पूर्वं तस्यान्वेष्यत्वादिकमित्यत्रान्यथोपपत्तिं शङ्कते ॥ **नन्विति** ॥ एतदाकाशस्वरूपं आक्षेपबीजमाकाशस्याल्पत्वमुपमया निरस्यान्तःस्थवस्तूक्तेः तदन्तःस्थमेव ध्येयमित्यर्थः। तर्हि जगदेव ध्येयं स्यादित्याह ॥ **नैतदेवमिति** ॥ अस्तु को दोषस्तत्राह

समाहितं द्यावापृथिव्यादि तदन्वेष्टव्यं विजिज्ञासितव्यं चोक्तं स्यात् । तत्र वाक्यशेषो नोपपद्येत । "अस्मिन् कामाः समाहिताः एष आत्मापहतपाप्मा" इति हि प्रकृतं द्यावापृथिव्यादिसमाधानाधारमाकाशमाकृष्य "थ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामानि" ति समुच्चयार्थेन च शब्देनात्मानं च कामाधारमाश्रितांश्च कामान् विज्ञेयान् वाक्यशेषो दर्शयति । तस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः सहान्तःस्थैः समाहितैः पृथिव्यादिभिः सत्यैश्च कामैः विज्ञेय उक्त इति गम्यते । स चोक्तेभ्यो हेतुभ्यः परमेश्वर इति ॥ १४ ॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च १५

दहरः परमेश्वर उत्तरेभ्यो हेतुभ्य इत्युक्तम् ।

॥ तत्रेति । सर्वनामभ्यां दहराकाशमाकृष्यात्मत्वादिगुणानुक्त्वा गुणैः सह तस्यैव ध्येयत्वं वाक्यशेषो ब्रूते, तद्विरोध इत्यर्थः । 'तस्मिन् यदन्तरि'ति तत्पदेन व्यवहितमपि हृदयं योग्यतया ग्राह्यमित्याह ॥ तस्मादिति ॥ यद्वा आकाशस्तस्मिन् यदन्तस्तदुभयमन्वेष्टव्यमिति योजनां सूचयति ॥ सहान्तः स्थैरिति ॥ ४ ॥

दहराकाशस्य ब्रह्मत्वे हेत्वन्तरमाह ॥ गतीति ॥ प्रजा जीवा एतं हृदयस्थं दहरं ब्रह्मस्वरूपं लोकमहरहः प्रत्यहं स्वापे गच्छन्त्यस्तदात्मना स्थिता अप्यनृताज्ञानेनावृतास्तं न जानन्ति अतः पुनरुत्तिष्ठन्तीत्यर्थः ।

त एवोत्तरे हेतव इदानीं प्रपञ्च्यन्ते। इतश्च परमेश्वर एव दहरो यस्मात् दहरवाक्यशेषे परमेश्वरस्यैव प्रतिपादकौ गतिशब्दौ भवतः। "इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती"ति, तत्र प्रकृतं दहरं ब्रह्मलोकशब्देनाभिधाय तद्विषया गतिः प्रजाशब्दवाच्यानां जीवानां अभिधीयमाना दहरस्य ब्रह्मतां गमयति। तथा ह्यहरहर्जीवानां सुषुप्त्यवस्थायां ब्रह्मविषयं गमनं दृष्टं श्रुत्यन्तरे "सता सोम्य तदा सम्पन्नो भवती"त्येवमादौ। लोकेऽपि किल गाढं सुषुप्तमाचक्षते 'ब्रह्मीभूतो ब्रह्मतां गत' इति। तथा ब्रह्मलोकशब्दोऽपि प्रकृते दहरे प्रयुज्यमानो जीवभूताकाशाशङ्कां निवर्तयन् ब्रह्मतामस्य गमयति। ननु कमलासनलोकमपि ब्रह्मलोकशब्दो गमयेत्, गमयेद्यदि ब्रह्मणो लोक इति षष्ठी-

नन्वेतत्पदपरामृष्टदहरस्य स्वापे जीवगम्यत्वेऽपि ब्रह्मत्वे किमायातमित्याशङ्क्य तथा हि दृष्टमिति व्याचष्टे॥ तथा हीति॥ लोकेऽपि दृष्टमित्यर्थान्तरमाह॥ **लोकेऽपीति**॥ गतिलिङ्गं व्याख्याय शब्दं व्याचष्टे॥ **तथेति**॥ जीवभूताकाशयोर्ब्रह्मलोकशब्दस्याप्रसिद्धेरिति भावः। ब्रह्मण्यपि तस्याऽप्रसिद्धिं शङ्कते॥ **नन्विति**॥ निषादस्थपतिन्यायेन समाधत्ते॥ **गमयेदिति**॥ षष्ठे चिन्तितं स्थपतिर्निषादः शब्दसामर्थ्यात्। रौद्रीमिष्टिं

१ ब्रह्मलोक शब्दस्य।

समासवृत्त्या व्युत्पाद्येत। सामानाधिकरण्यवृत्त्या तु व्युत्पाद्यमानो ब्रह्मैव लोको ब्रह्मलोक इति परमेव ब्रह्म गमयिष्यति। एतदेव चाहरहर्ब्रह्मलोकगमनं दृष्टं ब्रह्मलोकशब्दस्य सामानाधिकरण्यवृत्तिपरिग्रहे लिङ्गम्। न ह्यहरहरिमाः प्रजाः कार्यब्रह्मलोकं सत्यलोकाख्यं गच्छन्तीति शक्यं कल्पयितुम्॥ १५॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः १६॥

धृतेश्च हेतोः परमेश्वर एवायं दहरः कथं? "दहरोऽस्मिन्नन्तराकाश" इति हि प्रकृत्याकाशोप-

विधाय एतया निषादस्थपतिं याजयेदित्याम्नायते। तत्र निषादानां स्थपतिः स्वामीति षष्ठीसमासेन त्रैवर्णिको ग्राह्यः अग्निविद्यादिसामर्थ्यात् न तु निषादश्चासौ स्थपतिरिति कर्मधारयेण निषादो ग्राह्योऽसामर्थ्यादिति प्राप्ते सिद्धान्तः, निषाद एव स्थपतिः स्यात् निषादशब्दस्य निषादे शक्तत्वात्, तस्याश्रुतषष्ठ्यर्थसम्बन्धलक्षकत्वकल्पनायोगात् श्रुतद्वितीयाविभक्तेः पूर्वपदसम्बन्धकल्पनायां लाघवात् अतो निषादस्येष्टिसामर्थ्यमात्रं कल्प्यमिति। तद्वद्ब्रह्मलोकशब्दे कर्मधारय इत्यर्थः। कर्मधारयेलिङ्गं चास्तीति व्याचष्टे॥ **एतदेवेति**॥ सूत्रे चकार उक्तन्यायसमुच्चयार्थः॥ १५॥

सर्वजगद्धारणलिङ्गाच्च दहरः पर इत्याह॥ **धृतेरिति**॥ नन्वथशब्दाद्दहरप्रकरणं विच्छिद्य श्रुता धृतिर्न दहरलिङ्गमिति शङ्कते। ॥ **कथमिति**॥ य आत्मेति प्रकृतापकर्षात् अथशब्दो दहरस्य धृ-

म्यपूर्वकं तस्मिन् सर्वसमाधानमुक्त्वा तस्मिन्नेव चात्मशब्दं प्रयुज्यापहतपाप्मत्वादिगुणयोगं चोपदिश्य तमेवानतिवृत्तप्रकरणं निर्दिशत्य "थ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाये"ति । तत्र विधृतिरित्यात्मशब्दसामानाधिकरण्याद्विधारयितोच्यते,क्तिचः कर्तरि स्मरणात् । यथोदकसन्तानस्य विधारयिता लोके सेतुः क्षेत्रसम्पदामसम्भेदायैवमयमात्मा एषामध्यात्मादिभेदभिन्नानां लोकानां वर्णाश्रमादीनां च विधारयिता सेतुरसम्भेदायासङ्करायेति । एवमिह प्रकृते दहरे विधारणलक्षणं महिमानं दर्शयति, अयं च महिमा परमेश्वर एव श्रुत्यन्तरादुपलभ्यते "एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत"इत्या-

तिगुणविधिः प्रारम्भार्थमित्याह ॥ दहरोऽस्मिन्नित्यादिना ॥ श्रुतौ विधृतिशब्दः कर्तृवाचित्वात् क्तिजन्तः। सूत्रे तु महिमशब्दसामानाधिकरण्याद् धृतिशब्दः क्तिन्नन्तो विधारणं ब्रूते, 'स्त्रियां क्तिन् ( ३।३।९४)इति भावे क्तिनो विधानादिति विभागः। सेतुः सङ्करहेतुः, विधृतिस्तु स्थितिहेतुरित्यपौनरुक्त्यमाह ॥ यथोदकेति ॥ सूत्रं योजयति । एवमिहेति ॥ धृतेश्च दहरः परः अस्य धृतिरूपस्य नियमस्य च महिम्नोऽस्मिन् परमात्मन्येव श्रुत्यन्तर उपलब्धेरिति सूत्रार्थः । धृतेश्चेति चकारात् सेतुपदोक्तनियामकत्वलिङ्गं ग्राह्यं तत्र नियमने श्रुत्यन्तरोपलब्धिमा-

देः । तथान्यत्रापि निश्चिते परमेश्वरवाक्ये श्रूयते "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधारण एषां लोकानामसम्भेदाये"ति । एवं धृतेश्च हेतोः परमेश्वर एवायं दहरः ॥ १६ ॥

## प्रसिद्धेश्च ॥ १७ ॥

इतश्च परमेश्वर एव दहरोऽस्मिन्नन्तराकाश इत्युच्यते । यत्कारणमाकाशशब्दः परमेश्वरे प्रसिद्धः । "आकाशो वै नामरूपयोर्निर्वहिता," "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिप्रयोगदर्शनात् । जीवे तु न क्वचिदाकाशशब्दः प्रयुज्यमानो दृश्यते । भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धौ उपमानोपमेयभावाद्यसम्भवान्न ग्रहीतव्य इत्युक्तम् ॥ १७ ॥

## इतरपरामर्शात् स इति चेन्नासम्भवात् ॥ १८ ॥

यदि वाक्यशेषबलेन दहर इति परमेश्व-

ह ॥ एतस्येति ॥ धृतौ तामाह ॥ तथेति ॥ १६ ॥ आ समन्तात् काशते दीप्यते इति स्वयंज्योतिषि ब्रह्मण्याकाशशब्दस्य विभुत्वगुणतो वा प्रसिद्धिः प्रयोगप्राचुर्यम् ॥ १७ ॥

रः परिगृह्येतास्तीतरस्यापि जीवस्य वाक्यशेषे परामर्शः। "अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाचे"ति। अत्र हि सम्प्रसादशब्दः श्रुत्यन्तरे सुषुप्तावस्थायां दृष्टत्वादवस्थावन्तं जीवं शक्नोत्युपस्थापयितुं नार्थान्तरम्। तथा शरीरव्यपाश्रयस्यैव जीवस्य शरीरात् समुत्थानं सम्भवति। यथाकाशव्यपाश्रयाणां वाय्वादीनामाकाशात् समुत्थानं, तद्वत्। यथा चादृष्टोऽपि लोके परमेश्वरविषयआकाशशब्दः परमेश्वरधर्म-

यदि एष आत्मापहतपाप्मेत्यादिवाक्यशेषबलेन दहरः परस्तर्हि जीवोऽपीत्याशङ्क्य निषेधति॥ इतरेति॥ जीवस्यापि वाक्यशेषमाह॥ अथेति॥ दहरोक्त्यनन्तरं मुक्तोपसृप्यं शुद्धं ब्रह्मोच्यते, य एष सम्प्रसादो जीवोऽस्मात् कार्यकरणसङ्घात् सम्यगुत्थाय आत्मानं तस्माद्विविच्य विविक्तम् आत्मानं स्वेन ब्रह्मरूपेणाभिनिष्पद्य साक्षात्कृत्य तदेव प्रत्यक् परं ज्योतिरुपसम्पद्यते प्राप्नोतीति व्याख्येयम्। यथा-मुखं व्यादाय स्वपितीति वाक्यं सुप्त्वा मुखं व्यादत्ते इति व्याख्यायते तद्वत्। ज्योतिषोऽनात्मत्वं निरस्यति॥ एष इति॥ सम्प्रसादे रत्वा चरित्वेति श्रुत्यन्तरम्। अवस्थावदुत्थानमपि जीवस्य लिङ्गमित्याह॥ तथेति॥ तदाश्रितस्य तस्मात् समुत्थाने दृष्टान्तः॥यथेति॥ ननु क्वाप्याकाशशब्दो जीवेन दृष्ट इत्याशंक्योक्तावस्थोत्थानलिङ्गबलात् कल्प्य इत्याह॥ यथा चेति॥ नियामकाभावाज्जीवो दहरः किं

समभिव्याहारादा"काशो वै नामरूपयोर्निर्वहिते" त्येवमादौ परमेश्वरविषयोऽभ्युपगतः, एवं जीवविषयोऽपि भविष्यति। तस्मादितरपरामर्शात् दहरोऽस्मिन्नन्तराकाश इत्यत्र स एव जीव उच्यते इति चेत्, नैतदेवं स्यात्, कस्मादसम्भवात्। नहि जीवो बुद्ध्याद्युपाधि परिच्छेदाभिमानी सन्नाकाशेन उपमीयेत। न चोपाधिधर्मानभिमन्यमानस्यापहतपाप्मत्वादयो धर्माःसम्भवन्ति। प्रपञ्चितं चैतत् प्रथमसूत्रे, अतिरेकाशङ्कापरिहाराय तु पुनरुपन्यस्तम्। पठिष्यति चोपरिष्टात्"अन्यार्थश्च परामर्शः" (सू० १।३।२०)इति ॥१८॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु॥१९॥

इतरपरामर्शाद्या जीवाशङ्का जाता सा असम्भवात् निराकृता। अथेदानीं मृतस्यैवामृत-

न स्यादिति प्राप्ते नियामकमाह॥ नैतदित्यादिना ॥ दहरे श्रुतधर्माणामसम्भवात् न जीवो दहर इत्यर्थः तर्हि पुनरुक्तिस्तत्राह ॥ अतिरेकेति ॥ उत्तराच्चेत्यधिकाशङ्कानिरासार्थमित्यर्थः । का तर्हि जीवपरामर्शस्य गतिस्तत्राह ॥ पठिष्यतीति ॥ जीवस्य स्वापस्थानभूतब्रह्मज्ञानार्थोऽयं परामर्श इति वक्ष्यते ॥ १८ ॥

असम्भवादिति हेतोरसिद्धिमाशङ्क्य परिहरति ॥ उत्तराच्चेत्यादिसूत्रम्॥ निराकृताया जीवाशङ्कायाः प्रजापतिवाक्यबलात्

सेकात् पुनः समुत्थानं जीवाशङ्कायाः क्रियते उत्तरस्मात् प्राजापत्याद्वाक्यात् । तत्र हि "य आत्मापहतपाप्मे"त्यपहतपाप्मत्वादिगुणकं आत्मानमन्वेष्टव्यं विजिज्ञासितव्यं च प्रतिज्ञाय "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मे"ति ब्रुवन्नक्षिस्थं द्रष्टारं जीवमात्मानं निर्दिशति "एतं त्वेव ते भूयोऽनुव्याख्यास्यामी"ति च तमेव पुनःपुनः परामृश्य, "य एष स्वप्ने महीयमानश्चरत्येष आत्मे"ति । "तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मे"ति च जीवमेवावस्थान्तरगतं व्याचष्टे । तस्यैव चापहतपाप्मत्वादि दर्शयत्य"तदमृत-

पुनः समुत्थानं क्रियते तत्र जीवस्यैवापहतपाप्मत्वादिग्रहणेनासम्भवासिद्धेरित्यर्थः, कथं तत्र जीवोक्तिस्तत्राह ॥ तत्रेत्यादिना । यद्यप्युपक्रमे जीवशब्दो नास्ति तथाप्यपहतपाप्मत्वादिगुणकमात्मानमुपक्रम्य तस्य जाग्रदाद्यवस्थात्रयोपन्यासादवस्थालिङ्गेन जीवनिश्चयात्तस्यैव ते गुणाः सम्भवन्तीति समुदायार्थः । इन्द्रं प्रजापतिर्ब्रूते ॥ य एष इति ॥ प्राधान्यादक्षिग्रहणं सर्वैरिन्द्रियैर्विषयदर्शनरूपजाग्रदवस्थापन्नमित्याह ॥ द्रष्टारमिति ॥ महीयमानः वासनामयैर्विषयैः पूज्यमान इति स्वप्नपर्याये, तद्यत्रेति, सुषुप्तिपर्याये च जीवमेव प्रजापतिर्व्याचष्ट इत्यन्वयः । यत्र काले तदेतत् स्वप्नं यथा स्यात्तथा सुप्तः सम्यक् अस्तो निरस्तः करणग्रामो यस्य स समस्तः, अत एवोपहतकरणत्वात्, कृतकालुष्यहीनः संप्रसन्नः, स्वप्नं प्रपञ्चमज्ञानमात्रत्वेन विलापयति अतोऽज्ञानसत्त्वात् मुक्ता

मभयमेतत् ब्रह्मे”ति ।“नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानी”ति च सुषुप्तावस्थायां दोषमुपलभ्य “एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मादि”ति चोपक्रम्य शरीरसम्बन्धनिन्दापूर्वक“मेष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष” इति जीवशरीरात् समुत्थितं उत्तमं पुरुषं दर्शयति । तस्मादस्ति सम्भवो जीवे पारमेश्वराणां धर्माणाम् । अतो दहरोऽस्मिन्नन्तराकाश इति जीव एवोक्त इति चेत् कश्चिद्ब्रूयात् तं प्रतिब्रूयादावि-

द्विलक्षणः प्राज्ञः एष स्वचैतन्येन कारणशरीरसाक्षी तस्य साक्ष्यस्य सत्तास्फूर्तिप्रदत्वादात्मेत्यर्थः । चतुर्थपर्याये ब्रह्मोक्तेः तस्यैवापहतपाप्मत्वादिगुणा इत्याशङ्क्य तस्यापि पर्यायेऽस्य जीवत्वमाह ॥ नाहेति ॥ अहेति निपातः खेदार्थे । खिद्यमानो हीन्द्रः उवाच न खलु सुप्तः पुमानयं सम्प्रति सुषुप्त्यवस्थायामयं देवदत्तोऽहमित्येवमात्मानं जानाति । नो एव नैवेमानि भूतानि जानाति किन्तु विनाशमेव प्राप्तो भवति । नाहमत्र भोग्यं पश्यामि इति दोषमुपलभ्य पुनः प्रजापतिमुपससाद । तं दोषं श्रुत्वा प्रजापतिराह ॥ एतमिति ॥ एतस्मात् प्रकृतादात्मनोऽन्यत्रान्यं न व्याख्यास्यामीत्युपक्रम्य मघवन्मर्त्यं वा इदं शरीरं इति निन्दापूर्वकं जीवमेव दर्शयतीत्यर्थः । तस्मात् प्रजापतिवाक्यात् । अतः सम्भवासिद्धेः । सिद्धान्तयति ॥ तं प्रतीति ॥ अवस्थात्रया-

भूतस्वरूपस्त्विति। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः. नोत्तरस्मादपि वाक्यादिह जीवस्याशङ्का सम्भवतीत्यर्थः। कस्माद्यतस्तत्रापि आविर्भूतस्वरूपो जीवो विवक्ष्यते। आविर्भूतं स्वरूपमस्येत्याविर्भूतस्वरूपः, भूतपूर्वगत्या जीववचनम्। एतदुक्तं भवति। 'य एषोऽक्षिणी' त्यक्षिलक्षितं द्रष्टारं निर्दिश्योदशरावब्राह्मणेनैनं शरीरात्मताया व्युत्थाप्य "तं त्वेव त" इति पुनःपुनस्तमेव व्याख्येयत्वेनाकृष्य स्वप्नसुषुप्तोपन्यासक्रमेण परं ज्योतिरुपसम्पद्य स्वेन रूपेणा भिनिष्पद्यते" इति यदस्य पारमार्थिकं स्वरू-

च्छोधनेनाविर्भूतं शोधितत्वम् अर्थस्य वाक्योत्थवृत्त्यभिव्यक्तत्वमित्यर्थः। तर्हि सूत्रे पुंल्लिङ्गेन जीवोक्तिः कथं ज्ञानेन जीवत्वस्य निवृत्तत्वादित्यत आह ॥ भूतपूर्वेति ॥ ज्ञानात् पूर्वमविद्या तत्कार्यप्रतिबिम्बितत्वरूपं जीवत्वमभूदिति कृत्वा ज्ञानानन्तरं ब्रह्मरूपोपि जीवनाम्नोच्यत इत्यर्थः। विश्वतैजसप्राज्ञतुरीयपर्यायचतुष्टयात्मकप्रजापतिवाक्यस्य तात्पर्यमाह ॥ एतदिति ॥ जन्मनाशवत्त्वात् प्रतिबिम्बवद्बिम्बदेहो नात्मेति ज्ञापनार्थं प्रजापतिरिन्द्रविरोचनौ प्रत्युवाचोदशरावे आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे ब्रूतमित्यादिब्राह्मणेनेत्याह । उदशरावेति । उदकपूर्णे शरावे प्रतिबिम्बात्मानं देहं दृष्ट्वा स्वस्याज्ञातं यत्तन्मह्यं वाच्यमित्युक्तश्रुत्यर्थः । व्युत्थाप्य विचार्याभिनिष्पाद्यत इत्यत्रैतदुक्तं भवतीति सम्बन्धः। किमुक्तमित्यत आह। यदस्येति। जीवत्वरूपेण जीवं न व्याचष्टे लोकसिद्ध

पं परं ब्रह्म तद्रूपतयैनं जीवं व्याचष्ट, न जैवेन रूपेण। यत् परं ज्योतिरुपसम्पत्तव्यं श्रुतं तत् परं ब्रह्म तच्चापहतपाप्मत्वादिधर्मकं तदेव च जीवस्य पारमार्थिकं स्वरूपं तत्त्वमसीत्यादिशास्त्रेभ्यो नेतरदुपाधिकल्पितम्। यावदेव हि स्थाणाविव पुरुषबुद्धिं द्वैतलक्षणामविद्यां निर्वर्तयन् कूटस्थनित्यदृक्स्वरूपमात्मानमहं ब्रह्मास्मीति न प्रतिपद्यते तावज्जीवस्य जीवत्वम्। यदा तु देहेन्द्रियमनोबुद्धिसङ्घाताद्व्युत्थाप्य श्रुत्या प्रतिबोध्यते। 'नासि त्वं देहेन्द्रियमनोबुद्धिसङ्घातो नासि संसारी' किं तर्हि तद्यत् सत्यं स आत्मा चैतन्यमात्रस्वरूपस्तत्त्वमसीति। तदा कूटस्थनित्यदृक्स्वरूपमात्मानं प्रतिबुध्यास्माच्छरीराद्यभिमानात् समुत्तिष्ठन् स एव कूटस्थ-

त्वात् किंतु तमनूद्य परस्परव्यभिचारिणीभ्योऽवस्थाभ्यो विविच्य ब्रह्मस्वरूपं बोधयति अतो यद्ब्रह्म तदेवापहतपाप्मत्वादिधर्मकं न जीव इत्युक्तं भवति, शोधितस्य ब्रह्माभेदेन तद्धर्मोक्तेरित्यर्थः। एवमवस्थोपन्यासस्य विवेकार्थत्वान्न जीवलिङ्गत्वम् एतदमृतमभयमेतद्ब्रह्मेतिलिङ्गोपेतश्रुतिविरोधादिति मन्तव्यम्। ननु जीवत्वब्रह्मत्वविरुद्धधर्मवतोः कथमभेदस्तत्राह। **तदेवेति**। अन्वयव्यतिरेकाभ्यां जीवत्वस्याविद्याकल्पितत्वादविरोधः इति मत्वा दृष्टान्तेनान्वयमाह। **यावदिति**। व्यतिरेकमाह॥ **यदेति**॥ अविद्यायां सत्यां जीवत्वं वाक्योत्थ-

नित्यदृक्स्वरूप आत्मा भवति, "स यो ह वै त-त् परमं ब्रह्म वेद ब्रह्मैव भवती"त्यादिश्रुतिभ्यः। तदेव चास्य पारमार्थिकं स्वरूपं, येन शरीरात् समुत्थाय स्वेन रूपेणाभिनिष्पद्यते। कथं पुनः स्वं च रूपं स्वेनैव च निष्पद्यत इति सम्भवति कूटस्थनित्यस्य। सुवर्णादीनां तु द्रव्यान्तरसम्पर्कादभिभूतस्वरूपाणामनभिव्यक्तासाधारणविशेषाणां क्षारप्रक्षेपादिभिः शोध्यमानानां स्वरूपेणाभिनिष्पत्तिः स्यात्। तथा नक्षत्रादीनामहन्यभिभूतप्रकाशानामभिभावकवियोगे रात्रौ स्वरूपेणाभिनिष्पत्तिः स्यात्। न तु तथा आत्मचैतन्यज्योतिषो नित्यस्य केनचिदभिभवः सम्भवत्यसंसर्गित्वात् व्योम्न इव। दृष्टविरोधाच्च, दृष्टिश्रुतिमतिविज्ञातयो हि जीव-

प्रबोधात्तन्निवृत्तौ तन्निवृत्तिरित्याविद्यकं तदित्यर्थः। संसारित्वस्य कल्पितत्वे सिद्धं निगमयति ॥ **तदेव चास्येति** ॥ समुत्थाय स्वेन रूपेणाभिनिष्पद्यत इति श्रुतिं व्याख्यातुम् आक्षिपति ॥ **कथं पुनरित्यादिना** ॥ कूटस्थनित्यस्य स्वरूपमित्यन्वयः। मलसङ्गिनो हि क्रियया मलनाशादभिव्यक्तिर्न तु कूटस्थस्यासङ्गिन इत्याह ॥ **सुवर्णेति** ॥ द्रव्यान्तरं पार्थिवो मलः। अभिभूतेत्यस्य व्याख्यानमनभिव्यक्तेति। असाधारणो भास्वरत्वादिः अभिभावकः सौरालोकः। जीवस्वरूपस्याभिभवे बाधकमाह ॥ **दृष्टेति** ॥ विज्ञानघन एवेति श्रुत्या चिन्मात्रस्तावदात्मा तच्चैतन्यं चक्षुरादिजन्यवृ-

स्य स्वरूपं, तच्च शरीरादसमुत्थितस्यापि जीवस्य सदा निष्पन्नमेव दृश्यते। सर्वो हि जीवः पश्यन् शृण्वन्मन्वानो विजानन् व्यवहरत्यन्यथा व्यवहारानुपपत्तेः। तच्चेच्छरीरात् समुत्थितस्य निष्पद्येत प्राक् समुत्थानात् दृष्टो व्यवहारो विरुध्येत। अतः किमात्मकमिदं शरीरात् समुत्थानं, किमात्मिका च स्वरूपेणाभिनिष्पत्तिरिति। अत्रोच्यते, प्राक् विवेकविज्ञानोत्पत्तेः शरीरेन्द्रियमनोबुद्धिविषयवेदनोपाधिभिरविविक्तमिव जीवस्य दृष्ट्यादि ज्योतिःस्वरूपं भवति। यथा शुद्धस्य स्फटिकस्य स्वाच्छ्यं शौक्ल्यं च स्वरूपं प्राक् विवेकग्रहणाद्रक्तनीलाद्युपाधिभिरविविक्तमिव भवति। प्रमाणजनितविवेक-

त्तिव्यक्तं दृष्ट्यादिपदवाच्यं सत् व्यवहाराङ्गं जीवस्य स्वरूपं भवतीति तस्याभिभूतत्वे दृष्टो व्यवहारो विरुध्येत हेत्वभावाद्व्यवहारो न स्यादित्यर्थः। अज्ञस्यापि स्वरूपं वृत्तिषु व्यक्तमित्यङ्गीकार्यं व्यवहारदर्शनादित्याह ॥ **तच्चेति**॥ अन्यथेत्युक्तं स्फुटयति॥ **तच्चेदिति** ॥ स्वरूपं चेत् ज्ञानिन एव व्यज्येत ज्ञानात्पूर्वं व्यवहारोच्छित्तिरित्यर्थः। अतः सदैव व्यक्तस्वरूपत्वादित्यर्थः।सदा वृत्तिषु व्यक्तस्य वस्तुतोऽसङ्गस्यात्मनः आविद्यकदेहाद्यविवेकरूपस्य मलसङ्गस्य सत्त्वात्तद्विवेकापेक्षया समुत्थानादिश्रुतिरित्युत्तरमाह ॥ **अत्रेति** ॥ वेदना हर्षशोकादिः। अविविक्तमिवेति तादात्म्यस्य सङ्गस्य कल्पितत्वमुक्तम्।तत्र कल्पितसङ्गे दृष्टान्तः ॥ **यथेति**॥ श्रुतिकृतामिति त्वंपदार्थश्रुत्या योऽयं विज्ञानमयः प्रा-

ग्रहणात्तु पराचीनस्फटिकः स्वाच्छ्येन शौक्ल्येन च स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते प्रागपि तथैव सन्। तथा देहाद्युपाध्यविविक्तस्यैव सतो जीवस्य श्रुतिकृतं विवेकविज्ञानं शरीरात् समुत्थानं विवेकविज्ञानफलं स्वरूपेणाभिनिष्पत्तिः केवलात्मस्वरूपावगतिः। तथा विवेकाविवेकमात्रेणैवात्मनोऽशरीरत्वं सशरीरत्वं च मन्त्रवर्णात्, "अशरीरं शरीरेष्वि"ति "शरीरस्थोऽपि कौन्तेय न करोति न लिप्यत" इति च सशरीरत्वाशरीरत्वविशेषाभावस्मरणात्। तस्माद्विवेकविज्ञानाभावादनाविर्भूतस्वरूपः सन् विवेकविज्ञानादाविर्भूतस्वरूप इत्युच्यते, न त्वन्यादृशावाविर्भावानाविर्भावौ स्वरूपस्य सम्भवतः स्व-

णेष्विरयाद्यया सिद्धमित्यर्थः। प्राणादिभिन्नशुद्धत्वंपदार्थज्ञानस्य वाक्यार्थसाक्षात्कारः फलमित्याह ॥ केवलेति ॥ सशरीरत्वस्य सत्यत्वात् समुत्थानमुत्क्रान्तिरिति व्याख्येयं न विवेक इत्याशङ्क्याह ॥ तथाविवेकेति ॥ उक्तश्रुत्यनुसारेणेत्यर्थः। शरीरेष्वशरीरमवस्थितमिति श्रुतेः अविवेकमात्रकल्पितं सशरीरत्वम्, अतो विवेक एव समुत्थानमित्यर्थः। ननु स्वकर्मार्जिते शरीरे भोगस्यापरिहार्यत्वात् कथं जीवत एव स्वरूपाविर्भाव इत्यत आह। शरीरस्थोऽपीति। अशरीरवत् शरीरस्थस्यापि बन्धाभावस्मृतेर्जीवतो मुक्तिर्युक्तेत्यर्थः। अविरुद्धे श्रुत्यर्थे सूत्रशेषोक्त इत्याह ॥ तस्मादिति ॥ अन्यादृशौ सत्यावित्यर्थः। ज्ञानाज्ञानकृताविर्भावतिरोभावाविति स्थिते भेदोऽप्यंशांशित्वकृतो निरस्त

रूपत्वादेव। एवं मिथ्याज्ञानकृत एव जीवपरमेश्वरयोर्भेदो न वस्तुकृतः व्योमवदसङ्गत्वाविशेषात्। कुतश्चैतदेवं प्रतिपत्तव्यम्। यतो "य एषोऽक्षिणि पुरुषो दृश्यते" इत्युपदिश्यै "तदमृतमभयमेतत् ब्रह्मे"त्युपदिशति। योऽक्षिणि प्रसिद्धो द्रष्टा द्रष्टृत्वेन विभाव्यते सोऽमृताभयलक्षणाद्ब्रह्मणोऽन्यश्चेत् स्यात् ततोऽमृताभयब्रह्मसामानाधिकरण्यं न स्यात्। नापि प्रतिच्छायात्माऽयमक्षिलक्षितो निर्दिश्यते, प्रजापतेर्मृषावादित्वप्रसङ्गात्। तथा द्वितीयेऽपि पर्याये "य एष स्वप्ने महीयमानश्चरती"ति न प्रथमपर्यायनिर्दिष्टादक्षिपुरुषात् द्रष्टुरन्यो निर्दिष्टः, "एतं त्वेव ते भूयोऽनुव्याख्यास्यामी"त्युपक्रमात्। किं चाहमद्य स्वप्ने हस्तिनमद्राक्षं नेदानीं तं प-

इत्याह॥ एवमिति॥ अंशादिशून्यत्वमसङ्गत्वम्। आत्मा द्रव्यत्वव्याप्यजातिशून्यः विभुत्वात् व्योमवदित्यात्मैक्यसिद्धेर्भेदो मिथ्येत्यर्थः। प्रजापतिवाक्याच्च भेदो मिथ्येत्याकाङ्क्षापूर्वकमाह॥ कुतश्चेत्यादिना॥ एतद्भेदस्य सत्यत्वमेव नास्तीति कुत इत्यन्वयः। छायायां ब्रह्मदृष्टिपरमिदं वाक्यं, नाभेदपरमित्यत आह॥ नापीति॥ यस्य ज्ञानात् कृतकृत्यता सर्वकामप्राप्तिस्तमात्मानमन्विच्छाव इति प्रवृत्तयोरिन्द्रविरोचनयोर्यद्यनात्मच्छायां प्रजापतिर्ब्रूयात् तदा मृषावादी स्यादित्यर्थः। प्रथमवत् द्वितीयादिपर्याये व्यावृत्तास्ववस्थासु अनुस्यूतात्मा ब्रह्मत्वेनोक्त इत्याह॥ तथेति॥ अवस्थाभेदेऽप्यनुस्यूतौ युक्तिमाह॥ किंचेति॥ सुषुप्तौ-

श्यामीति दृष्टमेव प्रतिबुद्धः प्रत्याचष्टे, द्रष्टारं तु तमेव प्रत्यभिजानाति "य एवाहं स्वप्नमद्राक्षं स एवाहं जागरितं पश्यामी" ति । तथा तृतीयेऽपि पर्याये "नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति, नो एवेमानि भूतानी" ति सुषुप्तावस्थायां विशेषविज्ञानाभावमेव दर्शयति, न विज्ञातारं प्रतिषेधति । यत्तु "तत्र विनाशमेवापीतो भवती" ति तदपि विशेषविज्ञानविनाशाभिप्रायमेव, न विज्ञातृविनाशाभिप्रायम् । नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते "अविनाशित्वा" दिति श्रुत्यन्तरात् । तथा चतुर्थेऽपि पर्याये "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मादित्युपक्रम्य "मघवन्मर्त्यं वा इदं शरीर" मित्यादिना प्रपञ्चेन शरीराद्युपाधिसम्बन्धप्रत्याख्यानेन सम्प्रसादशब्दोदितं जीवं स्वेन रूपेणाभिनिष्पद्यत इति ब्रह्मस्वरूपापन्नं दर्शयन् न परस्मात् ब्रह्मणोऽमृताभयस्व-

ज्ञातुर्व्यावृत्तिमाशङ्क्याह ॥ तथा तृतीय इति ॥ सुषुप्तौ निर्विकल्पज्ञानरूप आत्मास्तीत्यत्र बृहदारण्यकश्रुतिमाह ॥ नहीति ॥ बुद्धेः साक्षिणो नाशो नास्ति नाशकाभावादित्यर्थः । एवमवस्थाभिरसङ्गत्वेनोक्त आत्मैव तुरीयेऽपि ब्रह्मत्वेनोक्त इत्याह ॥ तथेति ॥ श्रुतेरेक-

रूपादन्यं जीवं दर्शयति। केचित्तु परमात्मविवक्षायां "एतन्त्वेव ते" इतिजीवाकर्षणमन्याय्यं मन्यमाना एतमेव वाक्योपक्रमसूचितमपहतपाप्मत्वादिगुणकमात्मानं "ते भूयोनुव्याख्यास्यामी"ति कल्पयन्ति, तेषामेतमिति सन्निहितावलम्बिनी सर्वनामश्रुतिर्विप्रकृष्येत, भूयः श्रुतिश्चोपरुध्येत, पर्यायान्तराभिहितस्य पर्यायान्तरेऽनभिधीयमानत्वात्, "एतन्त्वेव ते" इति च प्रतिज्ञाय प्राक् चतुर्थात् पर्यायादन्यमन्यं व्याचक्षाणस्य प्रजापतेः प्रतारकत्वं प्रसज्येत। तस्माद्यदविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृभोक्तृरागद्वेषादिदोषकलुषितमनेकानर्थयोगि, तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपाद्यते। सर्पादिविलयनेनेव र-

देशिव्याख्यां दूषयति ॥ केचित्त्विति ॥ जीवपरयोर्भेदादिति भावः। श्रुतिबाधान्मैवमित्याह ॥ तेषामिति ॥ सन्निहितो जीव एव सर्वनामार्थ इत्यर्थः। उक्तस्य पुनरुक्तौ भूय इति युज्यते। तवतूपक्रान्तपरमात्मनश्चतुर्थ एवोक्तेस्तद्बाध इत्याह ॥ भूय इति ॥ लोकसिद्धजीवानुवादेन ब्रह्मत्वं बोध्यत इति स्वमतमुपसंहरति ॥ तस्मादिति ॥ व्याख्यानान्तरासम्भवादित्यर्थः। विलयनं शोधनं विद्यया महावाक्येनेति यावत्। ये तु संसारं सत्यमिच्छन्ति तेषामिदं शारीरकमेवोत्तरमि-

ज्वादीन्। अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्ते। अस्मदीयाश्च केचित्। तेषां सर्वेषामात्मैकत्वसम्यग्दर्शनप्रतिपक्षभूतानां प्रतिषेधायेदं शारीरकमारब्धमेक एव परमेश्वरः कूटस्थनित्यो विज्ञानधातुरविद्यया मायया मायाविवदनेकधा विभाव्यते नान्यो विज्ञानधातुरस्तीति। यत्त्विदं परमेश्वरवाक्ये जीवमाशङ्क्य प्रतिषेधति सूत्रकारः'नासम्भवात्' (१।३। १८।) इत्यादिना तत्रायमभिप्रायः नित्यशुद्धबुद्धमुक्तस्वभावे कूटस्थनित्य एकस्मिन्नसङ्गे परमात्मनि तद्विपरीतं जैवं रूपं व्योम्नीव तलमलादिपरिकल्पितं तदात्मैकत्वप्रतिपादनपरैर्वाक्यैर्न्यायोपेतैर्द्वैतवादप्रतिषेधैश्चापनेष्यामीति परमात्मनो जीवादन्यत्वं द्रढयति, जी-

त्याह ॥ अपरे त्वित्यादिना ॥ शारीरकस्यार्थं सङ्क्षेपणोपदिशति ॥ एक एवेति ॥ अविद्यामाययोर्भेदं निरसितुं सामानाधिकरण्यं आवरणविक्षेपशक्तिरूपशब्दप्रवृत्तिनिमित्तभेदात् सहप्रयोगः ब्रह्मैवाविद्यया संसरति न ततोऽन्यो जीव इति शारीरकार्थ इत्यर्थः। तर्हि सूत्रकारः किमिति भेदं ब्रूते तत्राह। यत्त्विति । परमात्मनोऽसंसारित्वसिद्ध्यर्थं जीवाद्भेदं द्रढयति। तस्यासंसारित्वनिश्चयाभावे तदभेदोक्तावपि जीवस्य संसारित्वानपायादित्यर्थः । अधिष्ठानस्य कल्पिताद्भेदेऽपि कल्पितस्याधिष्ठानान्न पृथक् सत्त्वमित्याह ॥ जीवस्य त्विति ॥ क-

वस्य तु न परस्मादन्यत्वं प्रतिपिपादयिषति. किंत्वनुवदत्येवाविद्याकल्पितं लोकप्रसिद्धं जीवभेदम् । एवं हि स्वाभाविककर्तृत्वभोक्तृत्वानुवादेन प्रवृत्ताः कर्मविधयो न विरुध्यन्त इति मन्यते, प्रतिपाद्यं तु शास्त्रार्थमात्मैकत्वमेव दर्शयति "शास्त्रदृष्ट्या तूपदेशो वामदेववद्" दित्यादिना, वर्णितश्चास्माभिर्विद्वदविद्वद्भेदेन कर्मविधिविरोधपरिहारः ॥ १९ ॥

## अन्यार्थश्च परामर्शः ॥ २० ॥

अथ यो दहरवाक्यशेषे जीवपरामर्शो दर्शितः "अथ य एष सम्प्रसाद" इत्यादिः स दहरे परमेश्वरे व्याख्यायमाने न जीवोपासनोपदेशो न प्रकृतविशेषोपदेश इत्यनर्थकत्वं प्राप्नोतीत्यत आह, अन्यार्थः । अयं जीवपरामर्शः न

ल्पितभेदानुमानस्य फलमाह ॥ एवं हीति ॥ सूत्रेष्वभेदो नोक्त इति भ्रान्तिं निरस्यति । **प्रतिपाद्यमिति** ॥ आत्मेति तूपगच्छन्तीत्यादि सूत्राणि आदिपदार्थः । नन्वद्वैतस्य शास्त्रार्थत्वे द्वैतापेक्षविधिविरोधस्तत्राह ॥ **वर्णितश्चेति** ॥ अद्वैतमजानतः कल्पितद्वैताश्रया विधयो न विदुष इति सर्वमुपपन्नमित्यर्थः ॥ १९ ॥

एवं प्रजापतिवाक्ये जीवानुवादेन ब्रह्मण एवापहतपाप्मत्वाद्युक्तेः जीवे तदसम्भवान्न जीवो दहर इत्युक्तं तर्हि जीवपरामर्शस्य का गतिरित्यत आह ॥ **अन्यार्थश्चेति** ॥ सूत्रं व्याचष्टे ॥ **अथेत्या-**

जीवस्वरूपपर्यवसायी। किं तर्हि? परमेश्वरस्वरूपपर्यवसायी, कथम्? सम्प्रसादशब्दोदितो जीवो जागरितव्यवहारे देहेन्द्रियपञ्जराध्यक्षो भूत्वा तद्वासनानिर्मितांश्च स्वप्नान्नाडीचरोऽनुभूय श्रान्तः शरणं प्रेप्सुरुभयरूपादपि शरीराभिमानात् समुत्थाय सुषुप्तावस्थायां परं ज्योतिराकाशशब्दितं परं ब्रह्मोपसम्पद्य विशेषविज्ञानवत्त्वं परित्यज्य स्वेन रूपेणाभिनिष्पद्यते। यदस्योपसम्पत्तव्यं परं ज्योतिः, येन स्वेन रूपेणायमभिनिष्पद्यते एष आत्मापहतपाप्मत्वादिगुण उपास्य इत्येवमर्थोऽयं जीवपरामर्शः परमेश्वरवादिनोऽप्युपपद्यते ॥ २० ॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

यदप्युक्तं दहरोऽस्मिन्नन्तराकाश इत्याकाशस्याल्पत्वं श्रूयमाणं परमेश्वरे नोपपद्यते, जीवस्य त्वाराग्रोपमितस्याल्पत्वमवकल्पत इति. तस्य परिहारो वक्तव्यः। उक्तो ह्यस्य परिहारः परमेश्वरस्यापेक्षिकमल्पत्वमवकल्पत इत्य-

दिना ॥ प्रकृते दहरे विशेषो गुणतस्तदुपदेशोऽपि नेत्यर्थः । तत्र दहरवाक्यशेषरूपं सम्प्रसादवाक्यमाशङ्कापूर्वकं, दहरब्रह्मपरत्वेन व्याचष्टे ॥ कथमित्यादिना ॥ २० ॥

"अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्चे"त्यत्रास एव इह परिहारोऽनुसन्धातव्य इति सूचयति । श्रुत्यैव चेदमल्पत्वं प्रत्युक्तं प्रसिद्धेनाकाशेनोपमिमानया "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इति ॥ २१ ॥

## अनुकृतेस्तस्य च ॥ २२ ॥

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती" ति समामनन्ति । तत्र यं भान्तमनुभाति सर्वं यस्य च भासा सर्वमिदं विभाति स किं तेजोधातुः कश्चिदुत प्राज्ञ आत्मेति विचिकित्सायां

उपास्यत्वादल्पत्वमुक्तमिति व्याख्याय श्रुत्या निरस्तमित्यर्थान्तरमाह ॥ श्रुत्यैव चेदमिति । एवं दहरवाक्यं प्रजापतिवाक्यं च सगुणे निर्गुणे च समन्वितमिति सिद्धम् ॥ २१ ॥

**अनुकृतेस्तस्य च** । मुण्डकवाक्यमुदाहरति ॥ **न तत्रेति** ॥ तस्मिन् ब्रह्मणि विषये न भाति तं न भासयतीति, यावत् । यदा चन्द्रभास्करादिर्न भासयति तदा अल्पदीप्तेरग्नेः का कथेत्याह ॥ **कुत इति** ॥ किंच सर्वस्य सूर्यादेस्तद्भास्यत्वान्न तद्भासकत्वमित्याह ॥ **तमेवेति** ॥ अनुगमनवदनुभानं स्वगतमिति शङ्कां निरस्यति ॥ **तस्येति** ॥ तत्रे-

१ तेन ब्रह्मणा भास्यत्वादित्यर्थः । २ गच्छन्तमनुगच्छतीतिप्रयोगप्रतीतानुगमनवत् ।

